महाकविकालिदासविरचितं

# रघुवंशमहाकाव्यम्

(महामहोपाध्यायकोलचलमल्लिनाथविरचितया
सञ्जीविन्या, सन्दर्भ-प्रसङ्ग-अन्वय-वाच्यपरिवर्तन-
चन्द्रिका व्याख्या, समास-कोश-हिन्दी शब्दार्थ
हिन्दीश्लोकार्थ-प्रश्नपत्रैश्च भूषितम्)

प्रथमः सर्गः

संपादकः
पं० जितेन्द्राचार्य



भारतीय विद्या प्रकाशन
वाराणसी दिल्ली

महाकविकालिदासविरचितं

# रघुवंशमहाकाव्यम्

(महामहोपाध्यायकोलचलमल्लिनाथविरचितया सञ्जीविन्या, सन्दर्भ-प्रसङ्ग-अन्वय-वाच्यपरिवर्तन-चन्द्रिका व्याख्या, समास-कोश-हिन्दी शब्दार्थ हिन्दीश्लोकार्थ-प्रश्नपत्रैश्च भूषितम्)

**प्रथमः सर्गः**

व्याख्याकारः

**पं० जितेन्द्राचार्य**

टीकाकारः

**श्री देवेन्द्रनाथ झा**

न्या० व्या० आ०

**भारतीय विद्या प्रकाशन**

वाराणसी

(भारत)

प्रकाशक:
**भारतीय विद्या प्रकाशन**
१. पो० बा० नं० ११०८, कचौड़ी गली, वाराणसी-२२१००१
२. १, यू० बी० बँग्लो रोड, जवाहरनगर, दिल्ली-११०००७

अन्य प्राप्तिस्थान:
**भारतीय बुक कारपोरेशन**
१, यू० बी० बँग्लो रोड, जवाहरनगर, दिल्ली-११०००७



षष्ट संस्करण : नवम्बर, १९९६

मूल्य : १५.००



मुद्रक:
**एवन ग्राफिक्स**
एक्स-४, गली नं०-२,
ब्रह्मपुरी, दिल्ली-११००५३
फोन : २१८३४७०

# आलोचना

**महाकवेः कालिदासस्य जीवनपरिचयः**–संस्कृतसाहित्याध्ययनाध्यापन-परिशीलनतत्पराणाञ्छात्राणामध्यापकानां विद्वत्तल्लजानाञ्च पुरतः कविकुल-शिरोमणिकालिदासविषये किञ्चित्कथनं लेखनं वा भानवे दीपदर्शनमिव सारहीनम्प्रतीयते। यतो हि वाल्मीकिव्यासयोरनन्तरं यथा प्रतिष्ठा कालिदासमनुगता न तथा कोऽप्यन्यःकविर्लेभे। न केवलमेतत्, अपितु भारतीयानाम्पाश्चात्यानाञ्च समालोचकानाम्मापकतुलासु तन्निकषेषु च कविकालिदासः संस्कृतभाषायाः श्रेष्ठः कविस्सिद्धो भवति, सः देशकालयोः सीम्निबद्धुन्न शक्यते। युवावस्थायां कालिदासोऽत्यन्तंमूर्ख आसीदित्येषा श्रूयते किंवदन्ती। यस्यां वृक्षशाखायामुपविष्ट आसीत्सः तामेंव शाखा शङ्कुलया छिन्दन्नासीत्। सर्वे राजाश्रिताः विद्वांसः एतस्य मूर्खतां दृष्ट्वा विदुषीं विद्योत्तमां राजकुमारीमूचु "हे कुमारिके! त्वत्ती विशिष्टः कोऽपि विद्वान् समागतो वर्तते। सः त्वया शास्त्रार्थकरणाय समुत्सुकोऽस्ति।" एतदनन्तरं शास्त्रार्थः प्रवृत्त उभयोः। शास्थार्थे च पूर्व विद्योत्तमया पराजितानां राजपण्डितानां षड्यन्त्रेण सा राजकुमारी पराजिता। ततश्च तैः राजपण्डितैः तस्याः रांजकुमार्याः कालिदासेन सह परिणयोऽपि सम्पादितः।

अथ कदाचिद्राजप्रासादपृष्ठे विद्योत्तमाकालिदासौ समुपविष्टावास्ताम्। तस्मिन्नेव काले घण्टापथे गच्छन्तं क्रमेलकसमूहं दृष्ट्वा विद्योत्तमा पप्रच्छकालिदासम्–"के इमे गच्छन्ति?" एवं पृष्टः सन् कालिदास उवाच–"उट्ट्र" इति।"

एवं "उष्ट्र" शब्दस्य स्थाने "उट्ट्र" इत्यपशब्दं श्रुत्वा क्रोधवशंगता विद्योत्तमां कालिदासं राजप्रासादपृष्ठान्नीचैर्निचिक्षेप। संयोगवशात् तत्क्षणं सः मपाकालीचरणयोः शरणम्प्रपन्नः। तदानीम्प्रसन्ना महाकाली प्रोवाच "वत्स!

वरं वृणीष्व।" परन्तु कालिदासः तवभिप्रायानुगमाऽभावात् विद्योत्तमानिक्षेपणहेतोश्च "कुतस्त्वमायात" इत्यस्योत्तरमनुसंदधानउपरिष्टादङ्गुलिनिदेशं कुर्वाणः विद्याशब्दमुच्चचार! तस्यायमभिप्राय आसीद्यत् "विद्योत्तमा' मां निचिक्षेप इति।" विद्येति वरयाचनोत्तरं श्रुत्वा महाकाली परमप्रसन्ना सती "तथास्तु" इत्येवं वरं ददौ।

एतद्वरानन्तरं विद्याप्रसादसम्पन्नः कालिदासः स्वधर्मपत्न्याः विद्योत्तमाया द्वारमुपेत्याऽर्गलां खट्खटायाञ्चक्रे। अर्गलाध्वनिं श्रुत्वा विद्योत्तमां पप्रच्छ "कोऽस्ति ?" उत्तरमागतम् "अहं कालिदासोऽस्मि।" तदा पुनः विद्योत्तमाऽन्वयुङ्क्त – "अस्ति कश्चिद्वाग्विशेषः ?" कालिदासः एतस्मिन्वाक्ये प्रयुक्तेषु शब्देषु प्रतिशब्दमधिकृत्यैकैकं काव्यं विरचितवान्। "अस्ति" पदमधिकृत्य "अस्त्युत्तरस्यां दिशि देवतात्मा" इति प्रतीकेन "कुमारसम्भवम्" नाम महाकाव्यञ्चकार। "कश्चित्" पदमधिकृत्य "कश्चित्कान्ता विरहगुरुणा स्वाधिकारात्प्रमत्तः" इति प्रतीकेन "मेघदूतम्" निर्ममे। "बाक्" पदमधिकृत्य "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये" इति प्रतीकेन "रघुवंशम्" महाकाव्यं व्यधात्। "विशेष" पदमधिकृत्य "विक्रमोर्वशीयम्", "मालविकाग्निमित्रम्"। "अभिज्ञानशाकुन्तलम्' इत्यादीनि नाटकानि लघुकाव्यानि च जग्रन्थ। एंवम्प्रदर्शितकाव्यविद्याकुशलः कालिदासः पण्डितम्भन्यायाः विद्योत्तमायाः मानमर्दनं व्यधात्।

एवं हि श्रूयते कदाचित् भारतीयकविसमाजे श्रेष्ठकवीनां गणना समारब्धा। तदानीं कालिदासाय कनिष्ठिकाङ्गुलिः कविभिर्निर्धारिता। तदनन्तरं कालिदासात् श्रेष्ठावानां कृते उत्तरोत्तरमङ्गुलिस्थानं व्यवस्थापितम्। किन्तु कालिदासा-दुत्कृष्टकवेरभावात् ततःप्रभृति कनिष्ठिकाङ्गुलिपार्श्वस्थिताङ्गुलिनाम "अनामिका" इति प्रसिद्धिमगात्। अस्मिन्विष्ये प्रसिद्धोऽयं श्लोको गीयतेऽभि-युक्तैः –

**पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।**
**अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूबा।।**

**कालिदासस्य कालनिर्णयः**—कविकुलशिरोमणेः महाकवेः कालिदासस्य जन्मनिवासादिवर्णनविषये तद्रचितमहाकाव्यनाटकादिषु न क्वापि किञ्चित् निर्दिष्टम्। अतोऽस्य विषये किमपि वास्तविकमुद्घोषणमसम्भवमेव। तथापि केचनैतिह्यविदो वदन्ति यत्कालिदासः गुप्तवंशीयस्थ चक्रवर्तिनो महाराजस्य कुमारगुप्तस्य समये बभूव। अवएव रघुवंशे (सर्ग ४, शलोक २६) "स गुप्त मूलप्रत्यन्तः" इति श्लोके "गुप्त" निर्दिदेश तथा "आकुमारककथोद्धताम्" (सर्ग ४, श्लोक २०) "कुमार" शब्दप्रयोगात् कालिदासः कुमारगुप्तकाले बभूव। परन्त्वेवं कथन श्लोकेभ्यः हठादाकृष्टस्यार्थस्य क्लिष्टा कल्पना किमुचितेति सर्वतो विभावयन्तु सुधियः।

केचन पाश्चात्याः विद्वांसः कालिदासस्य सत्तां ईशायाः षष्ठशताब्दीम्, पञ्चमशताब्दीम्, प्रथमशताब्दीं वा मन्यन्ते। ईशायाः षष्ठशताब्दीमतप्रवर्तकः डा० फर्गुसन नामा विद्वान् बभूव। तनोक्तं यत् ५४४ ईशवीये महारजाविक्रमादित्यः हूणान्पराजित्य तद्विजयस्मृतौ स्वयंवत्सरं। प्राचीचलत्। अयमेव कालिदासाऽभिमतोविक्रम आसित्। डा० मोक्षमूलरोऽप्येवमेव मतं प्रतिजज्ञे। डा० कील हार्नमतमस्ति यत् ईशायाः षष्ठशताब्द्यां कालिदासः यशोवर्मणः नृपस्याश्रित आसीत्। तस्यैव यशोवर्मणोदिग्विजयमधिकृत्य रघोर्दिग्विजयशंसिनो रघुवंशमहाकाव्यस्य रचना तेन कृता। परन्तूक्तमतं भ्रान्तिपूर्णमस्ति, हेतुस्तत्र ५४४ ईशवीये न कोपि विक्रमादित्यो बभूव। यदि कथञ्चित् कश्चित् स्यादपि तथापि सः हूणादिक एवं भवितुमर्हति नाऽऽर्य शकारिः। विश्वेतिहासे सञ्चालितस्य वर्तमानस्य संवत्सरस्य षडशीतिवर्षपूर्व प्राचीनताद्योतनाय न किमपि दृष्टान्टं दृग्गोचरीः भवति। ४७३ ईशवीयस्य मन्दसौरशिलालेखे मेघदूतस्य, ऋतुसंहारस्य च पद्यानां स्पष्टंस उल्लेखो दृश्यते। अतः ईशाया शताब्द्यां कालिदासस्य स्थिति निराधाराएव प्रतिभाति। ईशायाः पञ्चमशताब्दीप्रवर्तकाः विद्वांसः पाश्चात्यास्तथा कतिपये भारतीया अपि विद्वांसो दृश्यन्ते। तेषामयं विचारोऽस्ति यत् गुप्तकालो भारतीयसाहित्यस्य स्वर्णयुग

इति मन्यते। द्वितीय सम्राट् चन्द्रगुप्तः विक्रमादित्य इत्युपाधिं सम्प्रधार्य शकान् पराजितवान्। कालिदासस्य रघुवंशम विक्रमोर्वशीयम्, कुमारसम्भवम् प्रभृति महाकाव्येषु कुमारशब्दस्य गुप् धातोश्च प्रयोगाः कालिदासस्य गुप्तकालीनत्त्वं स्पष्टं संसाधयन्ति।

**कालिदासस्य जन्मस्थाननिर्णयः**–कालिदासस्य जन्मविषये प्राच्यैः प्रतीच्यैश्चैतिह्यविद्भिर्न किञ्चित् प्रामाणिकरूपेण निर्दिष्टन्तथाप्यस्माकम्मतेन तु सः उज्जयिन्या तत्पार्श्ववर्तिभागस्यैव वा वास्तव्य आसीदित्यनुमीयते।

यतो हि तेन पूर्वमेघदूते सतविंशे शलोके तथा एकत्रिंशे श्लोके स्पष्टमेव निर्दिष्टम्–

**वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशाम्।**
**सौधोत्सङ्गप्रणयविमुखो मास्मभूरुज्जयिन्याः।।**

(पू० मे० २७)

यथा–

**यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः।**
**सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः।।**

(पू० मे० ३१)

एतत्श्लोकोक्तविवरणात् सिप्रायाः, उज्जयिन्याः वर्णनहेतोश्च कालिदासः उज्जयिन्याः तत्पार्श्ववर्तिन्याश्च वसुन्धारायाः निदासी समनुमीयते। केचन विद्वांसः बङ्गानां, कश्मीराणां, विदर्भाणां वा निवासिनं तं मन्यन्ते यच्च नितान्तम्भ्रममूलकमेव प्रतिभाति।

**कालिदासस्य कृतयः**–"अस्ति कश्चिद्वाग्विशेषः" इतिनिर्देशानुसारम् "कुमारसम्भवम्", "मेघदूतम्", "रघुवंशम्", इत्येतानि त्रीणि काव्यानि विश्वविश्रुतानि निर्दिश्यन्ते। येषामनुवादाः प्राच्यप्रतीच्यविद्वद्भिस्स्वस्वभाषसु सम्पादिताः। "आस्तिकश्चिद्वाग्विशेष", इति वाक्योक्त "विशेष" पदेन प्रतीकरूपा

कृतयः "मालविकाग्निमित्रम्", "विक्रमोर्वशीयम्", "ऋतुसंहार", "कुन्तलेश्वर दौत्यम्", घटखर्परकाव्यम्", राक्षसकाव्यम्", "दुर्घटकाव्यम्", "नलोदयः", "वृन्दावनकाव्यम्", "विद्वद्विनोदकाव्यम्", "पुष्पबाणविलासः", "नवरत्नमाला", "ज्योतिर्विदाभरणम्", "अम्बास्तव", "कालिस्तोत्रम्", "गङ्गाष्टकम्", "कल्याणस्तवः", "शृङ्गारसारः", "शृङ्गारतिलकम्", "सेतुबन्धः" इत्यादिकाव्यनाटकमुक्तकरूपेणात्यन्तप्रसिद्धानि सन्त्येव तथापि तन्निर्मित अभिज्ञानशाकुन्तलेन श्रुतबोधेन च यत्पदम्प्राप्तम् तन्न किमप्यन्यदुपलेभे। अभिज्ञानशाकुन्तलस्यानुवादः स्वस्वशैलीमनुसृत्य स्वस्वभाषासु बहुभिः विद्वद्भिर्विहितः। एतद्विषये स्पष्टमुक्तमभियुक्तै :-

**काव्येषु नाटकं रम्यं तत्र रम्यं शकुन्तलम्।**

**तत्रापि चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम्।।**

एवमेव "श्रुतबोधः" इतिनामाभिधं छन्दः शास्त्रं यद्यपि कालिदासेन लघुतमरूपेण लिखितमस्ति तथापि तस्येदं वैशिष्टयमस्ति यच्छन्दसां निरूपणं तत्तच्छन्दस्येव कृतमस्ति, अन्येषु छन्दोविधायक ग्रन्थेषु नैवं विधं छन्दसां वर्णनमस्ति।

**कालिदासस्य वैसिटयम्**-महाकविकालिदास स्वकाले शृङ्गाररसस्य उपमाऽलङ्कारस्य च उद्भटः विद्वान् आसीत्। अतएव कविशिरोमणिर्बाणभट्टः स्वोपज्ञे "पदव्यञ्जना" नामाभिधे ग्रन्थे कालिदासस्य विषयेविशदं निरूपयाञ्चके-

**निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।**

**प्रीतिर्मधुरसान्द्रासु मञ्जरोष्विव जायते।।**

अर्थात् कालिदासस्य रससिक्तासु सुमधुरसूक्तिषु सहकारमञ्जरीष्वि-कस्य प्रीतिर्न जायते? अपितु सर्वस्यैव जनस्य तत्राकर्षणं जायते।

सामान्यतया कालिदासः सर्वास्वलङ्काररचनासु प्रसिद्ध एवास्ति, परन्तु उपमाऽलङ्कारविधाने न कोऽपि कविः क्षणमप्यवतिष्ठते। तथाहि-

"मार्गाचलव्यतिकराकुलितेव सिन्धुः,

शैलाधिराजतनया न ययौ न तस्थौ"।

"सञ्चारिणी दीपशिखेव रात्रौ,

यं यं व्यतीयाय पतिंवरा सा"।।

"वागर्थाविवसम्पृक्तौ वागर्थप्रतिपत्तये,

जगत पितरौ वन्दे पार्वतीपरमेश्वरौ"।।

इत्यादिश्लौकेषु परश्शता उपमाऽलङ्कारा: लभ्यन्ते, परन्तु रामरावणयोर्महति भयङ्करे युद्धे उपमाऽलङ्कारनिरूपणसमये कालिदास: किमप्युपमानमलभमान: स्पष्टं व्याजहार–

रामरावणयोर्युद्धं रामरावणयोरिव।

एवमेव भगवतो मार्यादापुरुषोत्तमस्य रामस्य विषये कल्पतरुः, सुमेरु, चिन्तामणिः, सूर्यः, चन्द्रः, कामदेवः, राजाबलिः, कामधेनुः प्रभृतिषु विशिष्टेषु उपमालङ्कारस्थानभूतेष्वपि तेषामुपमालङ्कारस्थानभूतानां खंडनं कुर्वाण: कालिदास: सडिण्डिमं कवीनां पुरस्तात् प्रश्नमुपस्थाप्य महतीं चमत्कृतिं प्रदर्शितवान्।। तथापि–

काष्ठंकल्पतरुः सुमेरुर चलश्चिन्तामणिः प्रस्तरः,

सूर्यस्तीव्रकरः शशी क्षयकरः क्षारो हि वारांनिधिः।

कामो नष्टतनुर्बलिर्दितिसुतो नित्यं पशुः कामगौः,

नैतास्तान् तुलयामि भो रघुपते! केनोपमा दीयताम्।।

महाकवि कालिदास: परम: शैव आसीत्। अतएव स: प्रतिकाव्यम् शिवस्य वन्दनामकरोत्। प्रसिद्धे स्वमहाकाव्ये रघुवंशे स: "जगत: पितरौ वन्दे पार्वतीपरमेश्वरौ।" अस्मिन् माङ्गलिके श्लोके पार्वतीपरमेश्वरौ पदेन शिव–पार्वत्योर्वन्दना तेन कृता, तथापि स: परमवैष्णव: "पार्वतीपरमेश्वरौ"

पदेन शिवपार्वत्योः रमाविष्णोश्चापि बोधो भवति। यथा–पार्वतीं पातीति पार्वतीपः। पार्वतीपश्च रमेश्वरश्च इति "पार्वतीपरमेश्वरौ" इत्येवं व्युत्पत्त्या शिवस्य विष्णोश्च वन्दना कालिदासेन कृतेति स्पष्टं प्रतिभाति।

"उपमा कालिदासस्य' 'कविकर्म काव्यम्' इति यथा कविः भवति तथैव तस्य काव्यमपि जायते। अतएव–"अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथासौ रोचते विश्वं तथेदं परिवर्तते।' इत्यादि वदन्तो व्यासमहोदया अपि सङ्गच्छन्ते। यद्यपि सर्वेषां कवीनां कृते कविमार्गः (कविसमयः) एक एवास्ति तथापि भिन्नरुचिर्हि लोकः' इति लोकोक्तिदिशा सर्वेषां कवीनां काव्यं किमपि पृथगेव वैशिष्ट्यं धारयतीति तदेवं चमत्करोति हृदयं काव्यभावना परिपक्वहृदयानां सहृदयानाम्, भावयित्रीभावनाभावितहृदयानां समालोचकानामिति तथैव तत्प्रसिद्धिरपि जायते। यथा–

**"उपमा कालिदासस्य भारवेरर्थगौरवम्।**
**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः।।**
**तावद्भा: भारवेः भाति यावन्माघस्य नोदयः।**
**उदिते नैषधे काव्ये क्व माघः क्व च भारविः।।"**

इत्यादि। कलात्मके वैशिष्ट्ये कविताविलासो महाकविः कालिदासः उपमालङ्कारप्रयोगे निपुण इति आलोचनोपलोघनानामालोचकानां मतमस्ति। यद्यप्यनेनोत्प्रेक्षा–रूपक–समासोक्तिविभावना–विशेषोक्तिकाव्यलिङ्गार्थान्तर–न्यासातिशयोक्त्यादीनामलङ्काराणां प्रयोगः प्रशस्तरूपेण कृतोऽस्ति स्वकीयेषु काव्येषु तथापि अस्योपमायां यथा चमत्कारो दृश्यते न तथाऽन्येषु। अतएवोक्तं मुक्तकण्ठमालोचकैः–

**"उपमा कालिदासस्य' इति।**

सजीवस्य सजीवेन, सजीवस्य निर्जीवेन, निर्जीवस्य, सजीवेन, निर्जीवस्य निर्जीवेन, अमूर्तस्य मूर्तेन, मूर्तस्यामूर्तेन चोपमायां कविस्तथा सिद्धहस्तोऽस्ति

यथा गूढतरोऽपि विषयोऽनायासमेव समक्षमायाति सहृदयानाम्। रघुवंशमहाकाव्ये दिलीप –सुदक्षिणयोर्मध्ये विराजमानां वशिष्ठधेनुं नन्दिनीं दिनक्षपयोर्मध्ये वर्तमानया संध्यया तुलयन्–

**पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या।**
**तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या।।**

अत्र दिनरात्र्योरूपलक्षणेन नहि केवलं सूर्य इव दिलीपप्रतापः, चन्द्र इव सुदक्षिणाया; नयनाभिरामत्वं व्यञ्जनया प्रकाशितम्, अपि तु राज्ञो गौरवर्णत्वम्, सुदक्षिणायाः श्यामत्वम्, रक्तवर्णत्वं सन्ध्यायाः नन्दिन्याः कपिलत्वं च प्रकटितमस्ति। सर्वमिदमुपमाप्रभावमात्रमिति नास्त्यपलापार्हम्।

तत्रैव स्वयंवरसमये इन्दुमती हस्ते वरमालिकामादाय राजसमूहे क्रमशः भ्रमति, यस्य राज्ञः पार्श्वे सा गच्छिति स वरणाशया प्रफुल्लितः, विकसितहृदयः, प्रदीप्तश्च जायते किन्तु तस्यामग्रे गतायां निराशान्धकारे निमग्नो भवति अस्याः स्थितेस्तुलनं कविस्तथा करोति यथा राजमार्गस्योभयतोऽट्टालिकाः सन्ति। प्रचलितायां दीपशिखायां पार्श्वस्थाऽट्टालिका प्रदीप्ता पश्चाच्चान्धा–काराच्छन्ना जायत इति–

**सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।**
**नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स सः भूमिपालः।।**

अस्याः उपमायाः प्रभावेण तथा प्रभाविताः जाताः सहृदयाः यत् कालिदासस्य दीपशिखेति संज्ञान्तरमुपस्थापितवन्तः।

अमूर्तस्य मूर्तेणोपमायामभिज्ञानशाकुन्तलस्यैकः श्लोकः उपस्थाप्यते–

**गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।**
**चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य।।**

अत्रमूर्तस्य मनसः मूर्तेन चीनांशुकेनोपमा कियत्सहजेति सहृदयाः विभावयन्तु।

उपमायां कवेस्तथाऽभिनिवेशो दृश्यते यथाऽनेन महाकाव्येष्वग्रेगण्यस्य रघुवंशमहाकाव्यस्य प्रारम्भ एवोवमाऽलङ्कारेण कृत:-

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
**जगत: पितरौ वन्दे पार्वतीपरमेश्वरौ।।**

मेघदूतकाव्ये रामगिर्याश्रमस्थस्य यक्षस्य दूतभूतो मेघोऽपि आषाढस्य प्रथमदिवसे पर्वतसानुसंश्लिष्टो वप्रक्रीडापरिणतेन केनचित् कृष्णकृष्णेन गजेनोपमितोऽस्ति-

**आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं।**
**वप्रक्रीडा परिणत गतप्रेक्षणीयं ददर्श।।**

परिणतफलद्योतिभि: काननाम्रै: छन्ने आम्रकूटनामक पर्वतशिखरे वर्तमाने मेघे स पर्वत: आम्रकूट: पृथिव्या मध्ये श्याम: शेषविस्तारपाण्डु: स्तन इव शोभा वक्ष्यतीति-

**छन्नोपान्त: परिणतफलद्योतिभि: काननाम्रै-**
**स्त्वय्यारूढे शिखरमचल: स्निग्धवेणीसवर्णे।**
**नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां**
**मध्ये श्याम: स्तन इव भुव: शेषविस्तारपाण्डु:।।**

एवमेवानेकप्रकारा: उपमा: सन्ति या: खलु सर्वथा हरन्ति मनांसि काव्यरसरसिकानां भावुकानामिति उपमामादाय कालिदासकविताशंसनं सार्वथा समुचितमेवास्ति-"उपमा कालिदासस्य'' इति।

**दिलीपवशिष्ठसंवाद:**-रघुवंशमहाकाव्यस्य प्रथमे सर्गे दिलीपवसिष्ठयो: संवादो लिखितोऽस्ति। पुत्राभावदु:खितो राजा दिलीप: सभार्य: पुत्रकाभ्यया कुलगुरो: वशिष्ठस्याश्रमं गत:। तत्र मुनिभि: सम्मानितो राजा सायंकालिक-पूजनस्यान्ते महर्षे: दर्शनं करोतिस्म। सपत्नीकं राजानं तत्रोपस्थितं दर्श दर्श अरुन्धत्या सहितो महर्षि: वशिष्ट: हर्षप्रकर्षमधिगच्छत्।

प्रथमं महर्षिरेव स्वकीयां मुखमुद्रां त्रोटितवान्। राज्ये सर्वत्र कुशलमस्ति राजन्! इति। राजाऽकथयत् दैवीनां मानुषीणां च आपदां हन्तरि त्वयि वर्तमाने सति मे सप्तसु राज्याङ्गेषु कुशलमस्ति। सर्वत्र अखिलं कुशलमस्ति किन्तु एतस्यां तव वध्वां सुदक्षिणायां किञ्चिदप्यपत्यं नास्तीति मे महत् कष्टमस्ति। मत्तः परं मम पितृणां निपवनानि कथं भविष्यन्तीति मत्त्वा मद्दत्तमपि जलं पितरः शुद्धं न प्राप्नुवन्ति, अपि तु अश्रुसम्पृक्तमेव। हे विधातः सन्ततिहीनोऽहं सकलामपि वसुधां वसुधाधिपत्यं च निष्फलं मन्ये।

राज्ञा निवेदितो महर्षिः तत्पुत्राभावकारणत्वं ज्ञातुं ध्यानमग्नः सञ्जातः। ध्यानावस्थितः सन् स ददर्श यत् कदाचिद् राजा मार्गे वर्तमानायाः कामधेनोः प्रदक्षिणां न कृतवान् इति कामधेनुस्तं शशाप यत् मत्प्रसूतिसेवां विना सन्ततिर्न भविष्यति। राज्ञा च तच्छापवचनं रथध्वनिना न श्रुतमिति। सर्वतिदं कारणं महर्षिः राज्ञेव्यजिज्ञपत्। राजा तच्छ्रुत्वा दुःखितः सञ्जांताः।

महर्षिवशिष्ठोऽवदत् इयं मदाश्रमे कामधेनुपुत्री नन्दिनी वर्तते। सभार्यस्त्वमत्रैव कञ्चित् कालं यावत् निवसन् तस्याः सेवां कुरु। तत्प्रसादेन तब पुत्रो भविष्यतीति। राजा नु पर्णकुटीं निर्माय तत्रैवाश्रमे निवसन तस्याः सेवामकरोत्।

एवं दिलीपवशिष्ठयोः संवादफलरूपेण राज्ञा नन्दिन्याः सेवा कृता तत्प्रसादेन च राजा पुत्रमवाप्तवान्।

**प्रथमसर्गस्य कथासारांशः**—रघुवंशस्य प्रारम्भे कविना पार्वतीपरमेश्वरयोः वदनानन्तरं स्वप्रतिभायाः अल्पत्वं सूर्यप्रभवस्य वंशस्यागम्यत्वं तन्महत्त्वं च प्रतिपादितमस्ति। ततश्च ज्ञायते यदस्मिन् सूर्यप्रभववंशे आसीत् राजा दिलीपः। स च महान् गुणवान्, प्रजावत्सलश्चाऽऽतीदिति। मगधवंशजा सुदक्षिणा नाम्नी तत्पत्न्यासीत्। सकलभूमण्डलाधिकारसत्त्वेऽपि तौ पुत्राभावाद् दुःखितौ स्तः।

एकस्मिन् दिवसे तौ दम्पती पुत्रकाम्यया विधातारं समभ्यर्य रथमारुह्य विनीतवेशौ कुलगुरोः वशिष्ठस्याश्रमं जग्मतुः। तत्र मुनिभिः सम्मानित सभार्यो राजा सायन्तनस्य विधेः अनन्तरम् अरुन्धत्या अन्वासितस्य तपोनिधेः महर्षेः वशिष्ठस्य दर्शनं कृतवान्। स्वाश्रमे सपत्नीकं राजानं प्राप्य गुरुः गुरुपत्नी च समधिकं प्रसन्नौ जातौ। प्रथमं गुरुरेव राजानं राज्ये कुशलादिकं पप्रच्छ। राजा तु "भगवन्! भवतां कृपया राज्ये सर्वं कुशलमस्ति किन्तु भवतामस्यां वध्वां किञ्चिदपत्यं नास्तीति आवयोः दुःखम्।''

महर्षिः वशिष्ठस्तु ध्यानमग्नः सन् तदपत्याभावकारणं कदाचित् तत्कृतं कामधेनोरपराधमेव मन्वानः पुत्रार्थं स्वाश्रमे वर्तमानायाः कामधेनुपुत्र्याः नन्दिन्याः सेवां कर्तुं राजानमादिदेश। राजा तु गुरोराज्ञां शिरोधार्य पर्णकुटीं कारयित्वा सभार्यस्तत्रैवाश्चमे निवासं कृतवान्।

# संक्षिप्त-कथा-सार

## प्रथम सर्ग

महाकवि कालिदास का शब्द और अर्थ के समान जुड़े हुए पार्वती परमेश्वर को प्रणाम करना, गर्व परिहार कर लेना, बाल्मीकि प्रभृति पूर्वकवि महानुभावों के रामायण आदि ग्रंथ बनाना मेरे जैसों के लिए रघुवंश के वर्णन में मार्ग दर्शक है-ऐसा कह कर रघु के वंशों में उत्पन्न सभी राजाओं में विद्यमान विशेष गुणों का निर्देश करना तथा मेरा यह रघुवंश काव्य सज्जन ही परखें-इतना कवि कालिदास का आरंभिक वक्तव्य है।

सर्वप्रथम राजा मनु हुए। उनके वंश में महाराज दिलीप उत्पन्न हुए। वह प्रजापालन में तत्पर थे। उन्हें चिरकाल तक सन्तान न हुई। महाराज दिलीप ने पुत्र सन्तान के बिना अपने साम्राज्य सुख को शून्य ही समझ कर अपनी धर्मपत्नी सुदक्षिणा के साथ गुरु वसिष्ठजी के पास जाकर प्रणाम करने के अनंतर उनसे कहा-"भगवन्! आपकी कृपा से मुझे सब आनन्द प्राप्त है किन्तु इस सुदक्षिणा को सन्तति हीन देखकर राज्यलक्ष्मी भी मुझे अच्छी नहीं लगती। मेरे अनन्तर पितर लोग पिण्ड रहित होकर निराश हो जायेंगे। यह पितृ ऋण मेरे लिए असह्य है।''

वसिष्ठजी ने थोड़ी देर चित्त की एकाग्रता से सन्तान न होने का रहस्य समझ कर राजा दिलीप से कहा-"एक बार तुमने स्वर्ग से लौटते समय ऋतुस्नाता धर्मपत्नी के पास आने की शीघ्रता में मार्ग में स्थित कामधेनु की परिक्रमा आदि पूजा न कर अनादर किया था। अतः उसने यह शाप तुमको दिया कि 'जब तक मेरी सन्तान की सेवा-शुश्रूषा न करोगे तब तक तुम्हें सन्तान न होगी।' इसलिये तुम्हें सन्तान न हो सकी। अभी वह कामधेनु तो वरुण लोक में एक यज्ञ के लिए रुकी हुई है। अतः तुम उसकी पुत्री नन्दिनी की आराधना करो।" इतना कहते ही वन से नन्दिनी

वहाँ आ पहुँची। शकुन-शास्त्रज्ञाता वसिष्ठजी ने राजा दिलीप से कहा-"तुम्हारी कामना अतिशीघ्र ही सम्पन्न हो जायगी। यह प्रसन्न होकर तुम्हारा मनोरथ पूर्ण कर देगी।"

राजा दिलीप ने गुरुजी की आज्ञा को सहर्ष स्वीकार कर लिया।

महाकवि–श्रीकालिदास–प्रणीतम्

# श्रीरघुवंश–महाकाव्यम्

सञ्जीविनी–छात्रोपयोगिनी–हिन्दीटीकायुतम्

## प्रथमः सर्गः

मातापितृभ्यां जगतो, नमो वामार्धजानये।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये।।
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम्।
वरं मुखे मन्महे किमपि तुन्दिलं महः।
शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम्।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम्।
वाणी काणभुजीमजीगणदवाशासीच्च वैयासिकी–
मन्तस्तन्त्रमरं पन्नगगवीगुम्फेषु चाजागरीत्।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां।
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः।।
मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया।
व्याचष्टे कालिदासीयं काव्यत्रयमनाकुलम्।।
कालिदासगिरां सारं कालिदासः सरस्वती।
चतुर्मुखोऽथवा साक्षाद्विदुर्नान्ये तु मादृशाः।।
तथापि दक्षिणावर्तनाथाद्यैः क्षुण्णवर्त्मसु।
वयं च कालिदासोक्तिष्ववकाशं लभेमहि।।
भारती कालिदासस्य दुर्व्याख्याविषमूर्छिता।

एषा सञ्जीविनी टीका तामद्योज्जीवयिष्यति।
इहान्वयमुखेनैव सर्व व्याख्याते मया।
नामूलं लिख्यते किञ्चिन्नानपेक्षितुमुच्यते।।

**सञ्जीविनो**–इह खलु सकलकविशिरोमणिः कालिदासः "काव्यं यश–सेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृत्ये कान्तासम्मिततयोपदेशयुजे।" इत्याद्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम्, "काव्यालापांश्च वर्जयेत्" इत्यस्य निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन्, रघुवंशाख्यं महाकाव्यं चिकीर्षुः, चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफल–साधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्राप्तत्वात्, "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुम्" इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात्काव्य निर्माणस्य विशिष्ठ शब्दार्थप्रतिपत्तिमूलकत्वेन विशिष्टशब्दार्थयोश्च "शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा। अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः।।" इति वायुपराणसंहितावचनबलेन पार्वतीपरमेश्वरायत्तदर्शनात्तत्प्रतिपित्सा तावेवाभिवादयते–

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।१।।**

**सन्दर्भः**–प्रस्तुतश्लोकोऽयं महाकविकालिदासविरचितस्य रघुवंश–महाकाव्यस्य प्रथमात् सर्गादुद्धृतोऽस्ति।

**प्रसङ्गः**–कविकुल गुरुः कालिदासः सर्वप्रथमं ग्रन्थनिर्विघ्न परिसमाप्त्यर्थं स्वशिष्यशिक्षायै च ग्रन्थादौ नमस्कारात्मकमङ्गलाचरणं कुर्वन् जगतः पितरौ पार्वती परमेश्वरौ नमस्करोति।

**अन्वयः**–वागर्थाविव, सम्पृक्तौ, जगतः, पितरौ, पार्वतीपरमेश्वरी, वागर्थ प्रतिपत्तये, वन्दे।

**सञ्जीविनो**–वागर्थाविवेत्येकं पदम् "इवेन सह नित्यसमासो

विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वं चेति वक्तव्यम्"। एव मन्यत्रापि द्रष्टव्यम्। वागर्थाविव शब्दर्थाविव संपृक्तौ नित्यसंबद्धावित्यर्थः। नित्यसंबद्धयो - रूपमानत्वेनोपादानात्। "नित्यः शब्दार्थसंबन्धः" इति मीमांसकाः। जगतो लोकस्य पितरौ । माता च पिता च पितरौ। "पिता मात्रा" इति द्वन्द्वैकशेषः। मातापितरौ पितरौ मातर पितरौप्रसूजनयितारो" इत्यमरः। एतेन शर्वशिवयोः सर्वजगज्जनकतया वैशिष्टचमिष्टार्थ प्रदानशक्तिः परमकारुणिकत्वं च सूच्यते। पर्वतस्यापत्यं स्त्री पार्वती "तस्यापत्यम्" इत्यण्। "टिड्ढाणञ द्वयसजदघ्नञ०" इत्यादिना ङीप। पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ। परमशब्दः सर्वोत्तमत्वद्योतनार्थः मातुरभ्यर्हितत्वादल्पाक्षरत्वाच्च पार्वतीशब्दस्य पूर्वनिपातः। वागर्थप्रतिपत्तये शब्दार्थयोः सम्यग्ज्ञानार्थ वन्देः अभिवादये। अत्रोपमालङ्कारः स्फुट एव। तथोक्तम्-"स्वतः सिद्धेन भिन्नेन संपन्नेन च धर्मतः। साम्यमयेन वर्ण्यस्य वाच्यं चेदेकगोपमा।" इति। प्राथमिकश्चोपमालङ्कारः कालिदासोक्त - काव्यादौ। भूदेवताकस्य सर्वगुरोर्मगणस्य प्रयोगाच्छुभलाभः सूच्यते। तदुक्तम्-"शुभदौ मो भूमिमयः" इति। वाकरस्यानृतबीजत्वात्प्रचयगमनादि - सिद्धिः।

**वा०**-(मया) पार्वतीपरमेश्वरौ वन्द्येते।

**चन्द्रिका**-"वन्दे" इति क्रियया "अहम्" इति कर्तृवाचकपदस्याक्षेपः। अहम्-कालिदासः, वागर्थाविव=वाच्यवाचकाविव, सम्पृक्तौ=नित्यमिलितौ शब्दार्थयोस्तादात्म्यादिति भावः। जगतः=संसारस्य, पितरौ=जननीजनकौ, पार्वतीपरमेश्वरौ=गौरीशङ्करौ, वागर्थप्रतिपत्तये=वाच्यवाचकयथार्थज्ञानाय, वन्दे=अभिवादये।

**समासः**-वाक् च अर्थः च वागर्थौ, वागर्थौ इव वागर्थाविव। माता च पिता च पितरौ, तौ पितरौ। परमश्चासौ ईश्वरः परमेश्वरः, पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ तौ पार्वतीपरमेश्वरौ। वाक् च अर्थश्च वागर्थौ, वागर्थयोः प्रतिपत्तिः आगर्थप्रतिपत्तिः तस्यै वागर्थप्रतिपत्तये।

कोश:—"ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती", "अर्थोऽभिधेय रैवस्तुप्रयोजननिवृत्तिषु", "अथो जगती लोको विष्टपं भुवनं जगत्:" "माता-पितरौ पितरौ मातरपितरौ प्रसूजनयितारौ", इति चागर:।

शब्दार्थ:—वागर्थाविव=शब्दार्थों की तरह, संपृक्तौ=सर्वदा मिले हुए जगत:=संसार के, पितरौ=माता और पिता, पार्वतीपरमेश्वरौ=गौरीशंकर को, वागर्थप्रतिपत्तये=शब्दार्थों के यथार्थ ज्ञान के लिए, वन्दे=प्रणाम करता हूँ। "वन्दे" क्रिया से "मैं कालिदास" इस कर्त्तृवाचक पद का आक्षेप होता है।

हिन्दी—शब्दार्थों के यथार्थज्ञान के लिए शब्दार्थों की तरह सर्वदा मिले हुए संसार के मात-पिता गौरीशंकर को प्रणाम करता हूँ।

क्व सूर्यप्रभवो वंश: क्व चाल्पविषया मति:।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्।।२।।

प्रसङ्ग:—अत्र महाकवि: सूर्यवंशस्योत्कर्षं सूचयन् स्व गारवं परिहरति।

अन्वय:—सूर्यप्रभव:, वंश:, क्व, अल्पविषया, मति:, च क्व, दुस्तरम्, सागरम् मोहात्, उडुपेन, तितीर्षु: अस्मि।

सञ्जीविनी—प्रभवत्यस्माद्रिति प्रभव: कारणम्। "ऋदोरप्" "अकर्तरि च कारके संज्ञायाम्" इति साधु:। सूर्य: प्रभवो यस्य स सूर्यप्रभवो वंश: क्व। अल्पो विषयो ज्ञेयोऽर्थो यस्या: सा मे मति: प्रज्ञा च क्व। द्वौ क्व शब्दौ महदन्तरं सूचयत:। सूर्यवंशमाकलयितुं न शक्नोमीत्यर्थ:। तथा च तद्विषयप्रबन्धनिरूपणं तु दूरापास्तमिति भाव:। तथाहि। दुस्तरं तरितुमशक्यम् "ईषद्दु: सुषु०" इत्यादिना खल्प्रत्यय:। सागरं मोहादज्ञानादुडुपेन प्लवेन "उडुपं तु प्लव: कोल:" इत्यमर:। अथवा चर्मावनद्धेन यानापात्रेण। "चर्मावनद्धमुडुपं प्लव: काष्ठं करण्डवन्" इति सज्जन:। तितीर्षुस्तरीतुमिच्छुरस्मि भवामि। तरते: सन्नन्तादुप्रत्यय:। अल्पसाधनैरधिकारंभो

न सुकर इति भावः। इदं च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव। तदुक्तम्–"प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तरः" इति।

**वा०**–सूर्यप्रभवेण वंशेन क्व (भूयते) अल्पविषयया (मम) मत्या च क्व (भूयते) (मया) तितीर्षुणा (भूयते)।

**चन्द्रिका:**–सूर्यप्रभवः=भानूत्पन्नः, वंशः=कुलम्, क्व=कुत्र, अल्पविषया=परिमितगोचरा, "मम" इत्यध्याहार्यम्। मतिः=बुद्धिः, च=पुनः, क्व=कुत्र, द्वौ "क्व" शब्दौ महदन्तरं सूचयतः। सूर्यवंशर्णनं मत्कृतसाध्यं नेत्यभिप्रायः। "अहम्" इत्यादिक्षिप्यते। मोहात्=अज्ञानात्, उडुपेन=चर्मावनद्धेन यानपात्रेण, दुस्तरम्=दुर्लङ्घ्यम्, सागरम्=अर्णवम्, तितीर्षुः=तरीतुमिच्छुः, अस्मि=भवामि।

**समास:**–सूर्यः प्रभवो यस्य सः सूर्यप्रभवः। अल्पो विषयो यस्याः सा अल्पविषया।

**कोश:**–"बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः," "सरस्वान् सागरोऽर्णवः", "उडुपं तु प्लवः कोलः", इति चामरः। "चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्" इति सज्जनः।

**शब्दार्थ:**–सूर्यप्रभवः-सूर्य से उत्पन्न, वंशः=कुल, क्व=कहाँ, अल्पविषया=थोड़ा जाननेवाली, मतिः=बुद्धि, च=और, क्व=कहाँ, दुस्तेरम्=नहीं पार करने योग्य, सागरम्=समुद्र को, मोहान्=अज्ञान से, उडुपेन=डोंगी (छोटी नाव) के द्वारा, तितीर्षुः=पार करने की इच्छा कर रहा अस्मि=हूँ।

**हिन्दी**–कहाँ सूर्यवंश और कहाँ मेरी सीमित बुद्धि? मैं अज्ञान से छोटी नाव के द्वारा दुर्लव्य समुद्र को पार करना चाहता हूँ।

**मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम्।**
**प्रांशुलभ्ये फले लोभादुब्दाहुरिव वामनः।।३।।**

**प्रसङ्ग:**–अत्र महाकविः कालिदासः रघुवंशमहाकाव्यनिर्माणे कवित्वेन सूर्यवंशस्योत्कर्ष सूचयन् स्वगौरवं परिहरति।

**अन्वयः**—मन्दः, कवियशःप्रार्थी, प्रांशुलभ्ये, फले लोभत्, उद्बाहुः, वामनः, इव, उपहास्यताम्, गमिष्यामि।

**सञ्जीवनी**—किं च मन्दो मूढः। "मूढाल्पपटुनिर्भाग्या मन्दाः स्युः" इत्यमरः। तथापि कवियशः प्रार्थी। कवीनां यशः काव्यनिर्माणेन जातं तत्प्रार्थना शीलोऽहं प्रांशुनोन्नतपुरुषेण लभ्ये, प्राप्ये फले फलविषये लोभादुद्बाहुः फलग्रहणायोच्छ्रित हस्तो वामनः खर्व इव। "खर्वो ह्रस्वश्च वामनः" इत्यमरः। उपहास्यतामुयहासविषयताम्। "ऋहलोर्ण्यत्" इति व्यत्प्रत्ययः। गमिष्यामि प्राप्स्यामि।



**वा०**—मन्देन कवियशःप्रार्थि नोद्बाहुना वामनेनवोपहास्यता गस्यते।

**चन्द्रिकाः**—मन्दःमूढः, "तथापि" कवियशःप्रार्थी=काव्यकर्तृकीर्त्यभिलाषी, "अहम्" इति शेषः। प्रांशुलभ्ये=उन्नतपुरुषप्राप्ये, फले=आम्रादौ, लोभात्=लिप्सायाः, उद्बाहुः=ऊर्ध्वभुजः, वामनः=खर्वः, इव=यथा, तथा, उपहास्यताम्=उपहासयोग्यताम्, गमिष्यामि=प्राप्स्यामि।

**समासः**—कवीनां यशः कवियशः, कवियशसः प्रार्थी कवियशःप्रार्थी। प्रांशुना लभ्यः प्रांशुलभ्यः, तस्मिन् प्रंशुलभ्ये। उच्छ्रितौ बाहू यस्य स उद्बाहुः।

**कोशः**—"मूढाऽल्पाऽपटुनिर्भाग्या मन्दाः "स्युः", "धीरो मनीषो ज्ञः प्रज्ञः। सङ्ख्यावान् पण्डितः कविः" "यशः कीर्तिः समज्ञा च", "उच्च प्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे", "खर्वो ह्रस्वश्च वामनः" इति चामरः।

**शब्दार्थः**—मन्दः=मूर्ख होने पर भी, कवियशःप्रार्थी=कवियों के यश को चाहने वाला (मैं), प्रांशुलभ्ये=लंबे पुरुषों के द्वारा तोड़े जाने योग्य, फले=फल के लिए, लोभात्=लालच से, उद्बाहुः=ऊपर की ओर बांहों को उठाये, वामनः=बौने के, इव=समान, उपहास्यताम्=उपहासयोग्यता को, गमिष्यामि=प्राप्त करेगा।

**हिन्दी**—मूर्ख होने पर भी कवियों के यश को चाहने वाला मैं लम्बे

पुरुषों से तोड़ने योग्य फल के लिये, लालच से ऊपर की ओर बाहों को उठाये बौनों की तरह हँसी का पात्र बन जाऊँगा।

**अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः।।४।।**

**प्रसङ्गः**–श्लोकेऽस्मिन् कविकुलगुरुः कालिदासः रघुवंशवर्णने "मणौ सूत्रस्येव मे वाक्संचारोऽस्ती" ति कथयति–

**अन्वयः**–अथवा, पूर्वसूरिभिः, कृतवाग्द्वारे, अस्मिन्, वंशे, वज्रसमुत्कीर्णे, मणौ, सूत्रस्य, इव, मे, गतिः, अस्ति।

**सञ्जीविनी**–अथवा पक्षान्तरे। पूर्वैः सूरिभिः कविभिर्वाल्मीक्यादिभिः कृतवाग्द्वारे कृतं रामायणादिप्रबन्धरूपा या वाक् सैव द्वारं प्रवेशो यस्य तस्मिन्।

अस्मिन् सूर्यप्रभवे वंशे कुले। जन्मनैकलक्षणः सन्तानो वंश वज्रेण मणिवेधकसूचीविशेषेण। "वज्र" त्वस्त्री कुलिशशस्त्रयोः। मणिवेधे रत्नभेदे इति केशवः। समुत्कीर्णे विद्धे मणौ रत्ने सूत्रस्येव मे मम गतिः संचारोऽस्ति। वर्णनीये रघुवंशे मम वाक्प्रसरोऽस्तीत्यर्थः।

**वा०**–मे गत्या भूयते।

**चन्द्रिका**–अथवा=पक्षान्तरे, पूर्वसूरिभिः=प्राचीनकविभिः, कृतवाग् द्वारे=विरचितकाव्यप्रवेशे, अस्मिन्=सूर्यप्रभवे, वंशे=कुले, वज्रसमुत्कीर्णे= कुलिशविद्ध", मणौ=रत्ने, सूत्रस्य=तन्तोः, इव=यथा, तथा, मे=मम, गतिः= प्रवेशः, अस्ति=भवति।

**समासः**–पूर्वे ते सूरयः पूर्वसूरयः तैः पूर्वसूरिभिः। वाक् एव द्वारम् वाग्द्वारम्, कृतम् वाग्द्वारम् यस्य सः कृतवाग्द्वारः तस्मिन् कृतवाग्द्वारे। वज्रेण समुत्कीर्णः वज्रसमुत्कीर्णः, तस्मिन् वज्रसमुत्कीर्णे।

**कोशः**–"पूर्वोऽन्यलिङ्गः प्रागह पुम्बहुत्वेऽपि पूर्वजान्," "धीमान सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः," "गीर्वाग्वाणी सरस्वती", स्त्री द्वार्द्वारं प्रतीहारः

स्यात्", "वंशोऽन्ववाम: सन्तान:", "रत्नं मणिर्द्वयोरश्मजातौ मुक्ताऽऽदिवेऽपि च", "सूत्राणि नार तन्तव:" इति चामर:। "वज्रं त्वस्त्री कुलिशशस्त्रयो:। मणिबेधे रत्नभेदे" इति केशव:।

**शब्दार्थ:**-अथवा=दूसरे पक्ष में, पूर्वसूरिभि:=प्राचीन विद्वानों के द्वारा, कृतवागद्वारे=निबन्ध आदि रूप प्रवेश मार्ग बनाये जाने पर, अस्मिन्= इस, वंशे=कुले (वर्णन) में, वज्रसमुत्कीर्णे=हीरों से छेद किये जाने पर, मणौ=रत्नों में, सूत्रस्य=धागे की, इव=तरह, मे=मेरा, गति:=प्रवेश, अस्ति=है।

**हिन्दी**-अथवा वाल्मीकि आदि कवियों के द्वारा रामायणप्रभृति ग्रन्थ रचे जाने पर सूर्यवंश का वर्णन वैसा ही है, जैसा हीरों से छेद किय जाने पर रत्नों में सूतों का प्रवेश।

**सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्।**

**आसमुद्रक्षितिशानामानाकरथवर्त्मनाम्।।५।।**

**प्रसङ्ग:**-श्लोकेऽस्मिन् महाकवि: कालिदास: रघुवंश्यनृपाणामाजन्मशुद्धादि गुणानां वर्णनं करोति-

**अन्वय:**-स: अहम्, आजन्मशुद्धानाम्, आफलोदयकर्मणाम्, आसमुद्रक्षितीजानाम्, आनाकरथवर्त्मनाम्, "रघूणामन्वयं वक्ष्ये" इति नवमश्लोकस्येनाऽन्वय:।

**सञ्जीविनी**-सोऽहम्। "रघूणामन्वयं वक्ष्ये" इत्युत्तरेण सम्बन्ध:। किंविधानां रघूणामित्यत्रोत्तराणि विशेषणानि योज्यानि। आजन्मन:। जन्मारभ्येत्यर्थ:। "आङ्मर्यादाभिविध्यो:" इत्यव्ययीभाव:। शुद्धानाम्। "सुप्-सुपा" इति समास:। एवमुत्तरत्रापि द्रष्टव्यम्। आजन्मशुद्धानाम्। निषेकादिसर्वसंस्कारसंपन्नानामित्यर्थ:। आफलोदयमाफलसिद्धे: कर्म येषां ते तथोक्तास्तेषाम्। प्रारब्धान्तगामिनामित्यर्थ:। आसमुद्रं क्षितेरीशानाम्।

सार्वभौमाणामित्यर्थ:। आनाकं रथवर्त्म येषां तेषाम्। इन्द्रसहचारिणामित्यर्थ:। अत्र सर्वत्राङोऽभिविध्यर्थत्वं द्रष्टव्यम्। अन्यथा मर्यादार्थत्वे जन्मादिषु शुद्ध्यभावप्रसङ्गात्।

**चन्द्रिका**–स:=पूर्वोक्त:, अहम्=कालिदास:, आजन्मशुद्धानम्=निषेकादिसंस्कारसंस्कृतानाम्, आफलोदयकर्मणाम=साध्यसिद्ध्यन्तव्यापारवताम, आसमुद्रक्षितीशानाम्=सार्वभौमाणाम्, आनाकरथवर्त्मनाम्=स्वर्गपर्यन्त स्यन्दनमार्गाणाम्, "रघूणामन्वयं वक्ष्ये" इति नवमश्लोकस्थेनान्वय:।

**समास:**–जन्मन: आ आजन्म, आजन्म शुद्धा: आजन्मशुद्धा:, तेषां आजन्मशुद्धानाम्। फलस्य उदय: फलोदय: फलोदयम् आ आफलोदयम्, आफलोदयं कर्म येषाम् ते आफलोदयकर्माण:, तेषाम् आफलोदयकर्मणाम्। क्षिते: ईशा: क्षितीशा:, समुद्रम् आ आसमुद्रम्, आसमुद्रम् क्षितीशा: आसमुद्र क्षितीशा:, तेषाम् आसमुद्रक्षितीशानाम्। न अकं यत्र स नाक:, नाकम् आ आनाकम्, रथस्य वर्त्म रथवर्त्म, आनाक रथवर्त्म येषाम् ते आनाकरथ वर्त्मान:, तेषाम् आनाकरथवर्त्मनाम्।

**कोश:**–"धरा धरित्री धरणि: क्षेणिर्ज्या काश्यपी क्षिति:", "स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालया:", "याने चक्रिणि युद्धार्थे शताङ्ग: स्यन्दनो रथ:", "अयनं वर्त्ममार्गाध्वपन्थान: पदवी सृति:" इति चामर:।

**शब्दार्थ:**–स:=वह (मैं), अहम्=कालिदास, आजन्मशुद्धानाम्=जन्म से ही शुद्ध, अफलोदयकर्मणम्=उद्देश्यसिद्धि तक यत्न करते रहने वाले, आसमुद्रक्षितिशानाम्= सागरपर्यन्त पृथ्वी के स्वामी, आनाकरथवर्त्मनाम= स्वर्गतक रथ ले जाने वाले।

**हिन्दी**–वह मैं कालिदास, जन्म से ही निषेक आदि संस्कारों से संस्कृत, कार्यसिद्धि पर्यन्त प्रयास करने वाले समुद्र पर्यन्त पृथ्वी के स्वामी, स्वर्ग तक रथ ले जाने वाले, रघुओं के कुल का वर्णन करूँगा।

**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।**
**यथापराधदण्डानां यथाकालप्रबोधिनाम्।।६।।**

**प्रसङ्गः**—सम्प्रति महाकविः रघुवंश्यनृपाणां यथा विधिहुताग्न्यादि गुणानां कथनं करोति।

**अन्वयः**—यथाविधिहुताग्नीनाम्, यथाकामार्चितार्थिनाम्, यथापराधदण्डानाम्, यथाकालप्रबोधिनाम्।

**सञ्जीविनी**—विधिमनतिक्रम्य यथाविधि। "अव्ययं विभक्ति" इत्यव्ययीभावः। तथा हुतशब्देन "सुप् सुपे" ति समासः। एवं "यथाकामार्चित्त" इत्यादीनामपि द्रष्टव्यम्। यथाविधि हुता अग्नयो यैस्तेषाम्। यथाकाममभिलाषमनतिक्रम्यार्चितार्थिनाम्। यथापराधमपराधम् अनतिक्रम्य दण्डो येषां तेषाम्। यथाकालं कालमनतिक्रम्य प्रबोधिनां प्रबोधनशीलानाम्। चतुर्भिर्विषणैर्देवतायजनार्थिसत्कारदण्डधरत्वप्रजापालनसमयजागरूकत्वादीनि विविक्षतानि।

**चन्द्रिका**—यथाविधिहुताग्नीनाम्=विधा नानुकूलकृतहोमानाम्, यथाकामर्चितार्थिनाम्=इच्छाऽनुसारपूजितयाचकानाम्, यथाऽपराधदण्डानाम्=आगमाऽनुसार-दण्डानाम्, यथाकालप्रबोधिनाम्=अवसरेऽवधानवताम्।

**समासः**—विधिम् अनतिक्रम्य यथाविधि, यथाविधि हुताः यथाविधि-हुताः, यथाविधिहुताः अग्नयो यैः ते यथाविधिहुताग्नयः, तेषाम् यथाविधि-हुताग्नीनाम्। कामम् अनतिक्रम्य यथाकामम् यथाकामम् अर्चिताः यथाकामाऽर्चिताः, यथाकामाऽचिर्ताः अर्थिनो यैः ते यथाकामऽर्चिताऽर्थिनः, तेषाम् यथाकामाऽर्चितार्थानाम् अपराधम् अनतिक्रम्य यथाऽपराधम् यथापराधम् दण्डो येषाम्. ते यथाऽपराधदण्डाः, तेषां यथाऽपराधदण्डानाम्। कालम् अनतिक्रभ्य यथाकालम्, यथा कालं प्रबोधिनः यथाकालप्राबोधिनः, तेषाम् यथाकालप्रबोधिनाम्।

**कोशः**—"विधिर्विधाने दैवेऽपि", कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्", "इच्छामनोभवौ कामौ", स्यादर्हिते नमस्यितं नमसितम-

**पचायितार्चितापचितम्, "वनीयको याचनको मार्गणो याचकाऽर्थिनौ"**, "आगोऽप **राधो मन्तुश्च", साहस तु दमो** दण्डः," "कालो दिष्टोऽप्यनेहाऽपि" इति **चामरः।**

**शब्दार्थः**–यथाविधिहुताऽग्नीनाम्=विधानाऽनुसार हवन करनेवाले, **यथाकामाऽर्चितार्थिनाम्**=इच्छानुसार याचकों को दान देने वाले, यथाऽ-**पराधदण्डानाम्**=अपराधों के अनुसार दण्ड देने वाले, यथाकालप्रबोधिनाम्= **समय पर सावधान** होने वाले।

**हिन्दी**–विधानानुसार हवन करने वाले, इच्छानुसार याचकों को दान देने वाले, दोषाऽनुसार दण्ड देने वाले, उचित समय पर सावधान होने वाले रघुओं के कुल का मैं वर्णन करूँगा।

**त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्।।७।।**

**प्रसङ्गः**–अत्र महाकविः रघुवंश्यनृपाणां त्यागाय सम्भृतार्थादिगुणानां कथन करोति–

**अन्वयः**–त्यागाय, सम्भृतार्थानाम्, सत्याय, मितभाषिणाम्, यशसे, विजिगीषूणाम्, प्रजायै, गृहमेधिनाम्।

**सञ्जीविनी**–त्यागाय सत्पात्रे विनियोगस्त्यागस्तस्मै। "त्यागो विहापित दानम्" **इत्यमरः। संभृतार्थानां** संचितधनानाम्। न तु दुर्व्यापाराय। सत्याय **मितभाषिणां मितभाषणशीलानाम्।** न तु पराभवाय। यशसे कीर्तये "यशः **कीर्तिः समज्ञा च" इत्यमरः।** विजिगीषूणां विजेतुमिच्छूनाम्। न त्वर्थसंग्रहाय। **प्रजायै सन्तानाय** गृहमेधिनां दारपरिग्रहाणाम्। न तु कामोपभोगाय। अत्र **"त्यागाय" इत्यादिषु** "चतुर्थी तदर्थार्थ०" इत्यादिना तादर्थ्ये चतुर्थी-**समासविधानज्ञापकाच्चतुर्थी।** गृहैर्दारैर्मेधन्ते संगच्छन्त इति गृहमेधिनः। **"दारेष्वपि गृहाः पुंसि" इत्यमरः।** "जाया च गृहिणी गृहम्" इति हलायुधः।

"मेधृ संगमे" इति धातोर्णिनिः। एभिर्विशेषणैः परोपकारित्वं सत्यवचनत्वं यशः परत्वं पितृणां शुद्धत्वं च विवक्षितानि।

**चन्द्रिका**—त्यागाय=दानाय, संभृतार्थानाम्=सञ्चितधनानाम्, दुर्व्यापाराय नेति भावः। सत्याय=तथ्याय मितभाषिणाम्=स्वल्पवचसाम्, पराभवाय न। यशसे=कीर्त्यै, विजिगीषूणाम्=विजयेच्छूनाम्, लुण्टनाय न। प्रजायै=सन्तानाय गृहमेधिनाम्=दारसंगमानाम्, कामशन्त्यै न।

**समासः**—संभृतः अर्थो यैस्ते संभृतार्थाः, तेषां सम्भृतार्थानाम। मितं भाषिणः मितभाषिणः, तेषां मितभाषिणाम्। गृहैः मेधिनः गृहमेधिनः तेषां गृहमेधिनाम्।

**कोशः**—"त्यागो विहापितं दानम्", सत्यं तथ्यमृतं सम्यक्," "यशः कीर्तिः समज्ञा च", "प्रजा स्यात् सनततौ जने", "दारेष्वपि गृहाः पुंसि" इति चामरः। "अर्थो हेतौ प्रयोजने। निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैमः। "जाया च गृहिणौ गृहम्" इति हलायुधः।

**शब्दार्थ**—त्यागाय=दान के लिए, संभृतार्थानाम्=धनसंग्रह करने वाले, सत्याय=सत्यपालन के लिए, मितभाषिणाम्=कम बोलने वाले, यशसे=कीर्ति के लिए, "विजिगीषूणाम्=जीतने की इच्छा रखने वाले, प्रजायै=सन्तान के लिए, गृहमेधिनाम्= स्त्रीप्रसङ्ग करने वाले।

**हिन्दी**—दान के लिए धन बटोरने वाले, सत्यपालन के लिए कम बोलने वाले, कीर्ति के लिए विजय की इच्छा रखने वाले, सन्तान के लिए स्त्रीप्रसङ्ग करने वाले रघुओं के कुल का मैं वर्णन करूँगा।

**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।**
**वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।।८।।**

**प्रसङ्गः**—श्लोकेऽस्मिन् महाकविः कालिदासः रघुवंश्यनृपाणां शैशवेऽभ्यस्तविद्यादिगुणानां वर्णनं करोति—

**अन्वयः**–शैशवे, अभ्यस्तविद्यानाम्, यौवने, विषयैषिणाम्, वार्द्धके, मुनिवृत्तीनाम्, अन्ते योगेन, तनुत्यजाम्।

**सञ्जीविनी**–शिशोर्भावः शैशवं बाल्यम्। "प्राणभृज्जातिवयोवचनोद्गात्र०" इत्यण्प्रत्ययः। "शिशुत्वं शैशवं बाल्यम्" इत्यमरः। तस्मिन्वयस्यभ्यस्तविद्यानाम्। एतेन ब्रह्मचर्याश्रमो विवक्षितः। यूनो भावो यौवनं तारुण्यम्। युवादित्वादण्प्रत्ययः। "तारुण्यं यौवनं समम्" इत्यमरः। तस्मिन्वयसि विषमैषिणाम् भोगाभिलाषिणाम्। एतेन गृहस्थाश्रमो विवक्षितः। वृद्धस्य भावो वार्द्धकम् वृद्धत्वम्। "द्वन्द्वमनोज्ञादिभ्यश्च" इति वुञ्प्रत्ययः। "वार्द्धकं वृद्धसंघाते वृद्धकर्मणि" इति विश्वः। संघातार्थे च "वृद्धाच्च इति वक्तव्यात्सामूहिको वुञ्। तस्मिन्वार्द्धके वयसि मुनीनां वृत्तिरिव वृत्तिर्येषां तेषाम्। एतेन वानप्रस्थाश्रमोविवक्षितः। अन्ते शरीरत्यागकाले योगने परमात्मध्यानेन। "योगः संनहनोपायध्यान-संगतियुक्तिषुः" इत्यमरः। तनुं देहं त्यजन्तीति तनुत्यजां देहत्यागिनाम्। "कायो देहः क्लौवपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः। "अन्येभ्योऽपि दृश्यते" इति क्विप्। एतेन भिक्ष्वाश्रमोविवक्षितः।

**चन्द्रिका**–शैशवे=बाल्ये, अभ्यस्तविद्यानाम्=कण्ठस्थीकृतशास्त्राणाम्, यौवने=तारुण्ये, विषयैषिणाम्=भोगाभिलाषिणाम्, वार्द्धके=जरायाम्, मुनिवृत्तीनाम्=ऋषिव्यापाराणाम्, अन्ते=अवसाने, योगेन=चित्तवृत्तिनिरोधेन, तनुज्यजाम्=देहत्यागिनाम्, एतेन ब्रह्मचर्याद्याश्रमो चितकार्यकारित्वं सूचितम्।

**समासः**–अभ्यस्ताः विद्याः यैः ते अभ्यस्तविद्याः, तेषाम् अभ्यस्तविद्यानाम्। मुनीनां वृत्तिरिव वृत्तिर्येषां ते मुनिवृत्तयः, तेषां मुनिवृत्तीनाम्।

**कोशः**–"शिशुत्वं शैशवं बाल्यम्", "तारुण्यं यौवनं समम्", "विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि", "वाचंयमो मुनिः", आजीवो जीविका वार्ता वृत्तिर्वर्त्तन जीवने", "अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः अन्तो नाशा द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्", "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु",

"कायो देहः क्लीवपुंसोः स्त्रियां मूर्तिस्तनूस्तनूः", इति चामरः। "वार्द्धकं वृद्ध संघाते वृद्धत्वं वृद्धकर्मणि" इति विश्वः।

**शब्दार्थः**—शैशवे=बाल्यावस्था में, अभ्यस्तविद्यानाम=शास्त्रों को अभ्यास किये हुए, यौवने=युवावस्था में, विषयैषिणाम्=विषयों (भोगविलास आदि) की इच्छा करने वाले, वार्द्धके=वृद्धावस्था में, मुनिवृत्ती नाम्=मुनियों के समान आचरण करने वाले, अन्ते=मृत्यु के समय में, योगेन=योग क्रियाओं से, तनुत्यजाम्=शरीर को त्यागने वाले।

**हिन्दी**—बाल्यावस्था में शास्त्रो का अभ्यास किये हुए, युवावस्था में भोगविलास की इच्छा करने वाले, वृद्धावस्था में मुनियों के समान आचरण करने वाले, मृत्यु के समय में यौगिक क्रियाओं के द्वारा शरीर को त्यागने वाले, रघुओं के कुल का मैं वर्णन करूँगा।

**रघुणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।**
**तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः।।९।।**

**प्रसङ्गः**—अल्पजातः सन्नपि रघूणां गुणश्रवणेन प्रेरितः सन् तेषां वंशस्य वर्णनं महाकविः करोत्यत्र—

**अन्वयः**—तनुवाग्विभवः, अपि, सन्, तद्गुणैः, कर्णम्, आगत्य, चापलाय, प्रचोदितः, रघूणाम्, अन्वयम्, वक्ष्ये।

**सञ्जीविनी**—सोऽहं लब्धप्रवेशः। तनुवाग्विभवोऽपि स्वल्पवाणीप्रसारोऽपि सन्। तेषां रघूणां गुणैस्तद्गुणैः। आजन्मशुद्ध्यादिभिः कर्तृभिः कर्णं मम श्रोत्रमागत्य चापलाय चापलं चपलकर्माविमृश्यकरणरूपं कर्तुम्। युवादित्वा- त्कर्मण्यण्। "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्यनेन चतुर्थी। प्रचोदितः प्रेरितः सन्। रघूणामन्वयं तद्विषयप्रबन्धं वक्ष्ये। कुलकम्।

**वा०**—तेन मया तनुवाग्विभवेन सता प्रचोदितेन अन्वयो वक्ष्यते।

**चन्द्रिका**—सः=एवंभूतः, अहम्=कालिदासः, "सोऽहम्" इति पञ्चम-

श्लोकस्थानकर्तृवाचकपदेनान्वयः। तनुवागविभवः=अल्पज्ञः अपि सन्=भवन्, तद्गुणैः=रघुगुणैः, आजन्मशुद्ध्यादिभिरिति भावः। कर्णम्=श्रोत्रम्, आगत्य=प्राप्य, चापलाय=चाञ्चल्याय, प्रचोदितः=प्रेरितः, रघूणाम्=रघुवंश्यानां राज्ञाम्, अन्वयम्=वंशम्, वक्ष्ये=कथयिष्ये।

**समासः**—वाचाम् विभवः वाग्विभवः, तनुः वाग्विभवो यस्य सः तनुवाग्विभवः। तेषाम् गुणा तद्गुणाः तैः तद्गुणैः।

**कोशः**—"गीर्वाग्वाणी सरस्वती", "कर्णशब्दग्रहौ श्रोत्रंश्रुतिः स्त्री श्रवणं श्रवः", "चपलः चिकुरः समौ", "वंशोऽन्ववायः सन्तानः" इतिचामरः। "तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे", विभवो रैमोक्षैश्वर्ये" इति च मेदिनी।

**शब्दार्थः**—तनुवाग्विभवः=थोड़ा जानने वाला, अपि=भी, सन्=होता हुआ, तद्गुणैः=रघुवंशी राजाओं के गुणों के, कर्ण=कान में, आगत्य=आने पर, चापलाय=चञ्चलता के लिए, प्रचोचितः=प्रेरित, रघूणाम्=रघुवंशी राजाओं के, अन्वयम्=वंश को, वक्ष्ये=कहूँगा अर्थात् वर्णन करूंगा।

**हिन्दी**—थोड़ा जानता हुआ भी रघुवंशियों के गुणों के कान में पड़ने से चञ्चलता के लिये प्रेरित होकर उनके वंश का वर्णन करूँगा।

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।**
**हेम्नः संलक्ष्यते ह्यग्नी विशुद्धि श्यामिकापि वा।।१०।।**

**प्रसङ्गः**—गुणदोषविवेचकाः सज्जना एव रघुवंशमहाकाव्यस्य श्रवणं कर्तु शक्नुवन्तीति कथयति महाकविः कालिदासः—

**अन्वयः**—तम् सदसद्व्यक्तिहेतवः, सन्तः, श्रोतुम्, अर्हन्ति, हि हेम्नः, विशुद्धिः, श्यामिका, अपि, वा, अग्नौ, संलक्ष्यते।

**सञ्जीविनी**—तं रघुवंशाख्यं प्रबन्धं सदसतोर्गुणदोषयोर्व्यक्तेर्हेतवः कर्तारः सन्तः श्रोतुमर्हन्ति। तथाहि। हेम्नो विशुद्धिनिर्दोषस्वरूपं श्यामिकापि

लौहान्तरसंसर्यात्मको दोषोऽपि वाग्नो संलक्ष्यते। नान्यत्र। तद्वदत्रापि सन्त एव गुणदोषविवेकाधिकारिण: नान्य इति भाव:।

**वा०**-स: सदसद्व्यक्तिहेतुभि:, सद्भि: **श्रोतुमर्ह्यते, हेम्न:** विशुद्धिश्यामिकामपि अग्नौ (सन्त:) संलक्ष्यन्ति।

**चन्द्रिका**-तम्=रघुवंशाख्यं महाकाव्यम्, सदसद्व्यक्तिहेतव: **गुणदोषा**-विष्कर्त्तार:, सन्त:=सज्जना:, श्रोतुम्=आकर्णयितुम्, **अर्हन्ति=योग्या भवन्ति,** हि:=यत:, हेम्न:=सुवर्णस्य, विशुद्धि:=निर्दोषत्वम्, **श्यामिका=सदोषत्वम्,** अपि, वा=अथवा, अग्नौ=वह्नौ, संलक्ष्यते=ज्ञायते।

**समास:**-सच्च असच्च सदसती, सदसतो: **व्यक्ति: सदसद्व्यक्ति:** सदसद्व्यक्तेर्हेतव: सदसद्व्यक्तिहेतव:।

**कोश:**-"सत्ये साधौ विद्यमाने शस्तेऽभ्यर्हिते च सत्", **"व्यक्तिस्तु** पृथगात्मता", "हेतुर्ना कारणं बीजम्", सुवर्ण कनकं हिरण्यं हेम हाटकम्" इति चामर:। "श्यामो वटे प्रयागस्य वारिदे वृद्धदारिके। **पिके च कृष्णहरितो:** पुंसि स्यात्तद्वति त्रिषु। मरीचे सिन्धुलवणे **क्वीवं स्त्री सारिवौषधौ।** अप्रसूताङ्गनायाञ्च प्रियङ्गावपि चौच्यते। "यमुनायां त्रियामायां **कृष्णत्रिवृतिकौषधौ।** नीलिकायाम्" इति मेदिनी।

**शब्दार्थ:**-तम्="रघुवंश" नाम के महाकाव्य **को, सदसद्व्यक्ति**-हेतव:=गुण-दोषों को जानने वाले, सन्त:-सज्जन, **श्रोतुम्=सुनने (पढ़ने)** के, अर्हन्ति=योग्य हैं, हि=जिस लिए कि, हेम्न:=**सोने की, विशुद्धि:=शुद्धता** (खरापना), श्यामिका=दोष (खोटापन), अपि=भी, **वा=अथवा, अग्नौ=आग** में, संलक्ष्यते=समझा जाता है।

**हिन्दी**-गुण-दोषों को जानने वाले सज्जन **रघुवंश नाम के महाकाव्य** को सुनने (पढ़ने) के योग्य हैं, क्योंकि सोने की **शुद्धता (खरापन) अथवा** दोष (दोष खोटापन) भी आग में समझा जाता है।

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।**
**आसीन्महीमहोक्षितामाद्यः प्रणवश्छन्दसामिव।।११।।**

**प्रसङ्गः**—श्लोकेऽस्मिन् महाकविः कालिदासः रघुवंशस्योत्पत्तिकथनं करोति—

**अन्वयः**—मनीषिणाम्, माननीयः, छन्दसाम्, प्रणवः, इव महीक्षिताम्, आद्यः वैवस्वतः नाम, मनुः, आसीत्।

**सञ्जीविनी**—मनस ईषिणो मनीषिणो धीराः। विद्वांस इति यावत्। पृषोदरादित्वात्साधुः तेषां माननीयः पूज्यः। छन्दसां वेदानाम्। "छन्दः पद्ये च वेदे च" इति विश्वः प्रणव ओंकार इव। महीं क्षियन्तीशत इति महीक्षितः क्षितीश्वराः। क्षिधातोरैश्वर्यार्थात्क्विप् तुगागमश्च। तेषामाद्य आदिभूतः। विवस्वतः। सूर्यस्यापत्यं पुमान्वैवस्वतो नाम वैवस्वत इति प्रसिद्धो मनुरासीत्।

**वा०**—माननीयेन प्रणवेन आद्येन वैवस्वतेन मनुनाऽभूयत।

**चन्द्रिका**—मनीषिणाम्=पण्डितानाम्, माननीयः=पूज्यः, छन्दसाम्=वेदानाम्, प्रवण=ओंकारः, इव=यथा, तथा, महीक्षिताम्=राज्ञाम्, आद्यः=प्रथमः, वैवस्वतः=विवस्वदपत्यपुंमा स्त्वविशिष्टः, नाम="वैवस्वत" संज्ञक, मनुः=मनूनामन्यतमः प्रथमो मनुः, आसीत्=अभूत्।

**समासः**—मनसः इषिणो मनीषिणः, तेषाम् मनीषिणाम्।

**कोशः**—"धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः" "ओंकारप्रणवौसमौ", "राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः", "नाम प्रकाश्यसम्भाव्यक्रोधोपगमकुत्सेने" इति चामरः। "छन्दः पद्ये च" इति विश्वः।

**शब्दार्थः**—मनीषिणाम्=पण्डितों के, माननीयः=पूज्य, छन्दसाम्=वेदों के, प्रणवः=ओंकार के, इव=समान, महीक्षिताम्=राजाओं के, आद्यः=प्रथम, वेवस्वतः=विवस्वान् सूर्य का पुत्र, नाम="वैवस्वत" नाम का, मनुः=मनुओं में प्रथम, आसीत्=था।

**हिन्दी**–पण्डितों के पूज्य, वेदों में ओंकार के समान राजाओं में प्रथम 'वैवस्वत" नाम का मनु था।

**तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।**
**दिलीप इति राजेन्दुरिन्दुः क्षीरनिध्धाविव।।१२।।**

**प्रसङ्गः**–अत्र महाकविः क्षीरसमुद्रे चन्द्र इव मनुवंशे राजा दिलीपः जातोऽभूदिति कथयति–

**अन्वयः**–शुद्धिमति, तदन्वये, शुद्धित्तमरः, दिलीपः, इति, राजेन्दुः, क्षीरनिधौ, इन्दुः, इव, प्रसूतः।

**सञ्जीविनी**–शुद्धिरस्यास्तीति शुद्धिमान्। तस्मिञ्शुद्धिमति। तदन्वये तस्य मनोरन्वये वंशे। "अन्ववायोऽन्वया वंशो गोत्रं चाभिजनं कुलम्" इति हलायुधः। अर्तिशयेन शुद्धिमाञ्शुद्धिमत्तरः। "द्विवचनविभज्योप०" इत्यादिना तरप्। दिलीप इति प्रसिद्धो राजा इन्दुरिव राजेन्दू राजश्रेष्ठः। "उपमितं व्याघ्रदिभिः" इत्यादिना समासः। क्षीरनिधाविन्दुरिव प्रसूतो जातः।

**चन्द्रिका**–शुद्धिमति=पवित्रे, तदन्वये=मनुवंशे, शुद्धिमत्तरः= अतिशयपवित्रः, दिलीपः=एतन्नामकः, इति=प्रसिद्धः, दिलीपनाम्नेति भावः। राजेन्दुः=नृपचन्द्रः क्षीरनिधौ=पयोदधौ, इन्दुः=चन्द्रः, इव=यथा, तथा, प्रसूतः=जातः।

**समासः**–तस्य अन्वयः तदन्वयः, तस्मिन् तदन्वये। राज्ञाम् इन्दुः राजेन्दुः। क्षीरस्य निधिः क्षीरनिधिः तस्मिन् क्षीरनिधौ।

**कोशः**–"दुग्धं क्षीरं पयः समम्", इति "हेतुप्रकरणप्रकाशादिसमाप्तिषु", "हिमांशुश्चन्द्रमाश्चन्द्रः इन्दुः कुमुदबान्धवः" इति चामरः। "अन्ववायोऽन्वयो वंशो गोत्रं चाभिजनं कुलम्" इति हलायुधः।

**शब्दार्थ**–शुद्धिमति=पवित्र, तदन्वये=मनुवंश में, शुद्धिमत्तरः=अतिशय पवित्र, दिलीपः=दिलीपनामवाला, इति=प्रसिद्ध, राजेन्दुः=राजाओं में श्रेष्ठ,

क्षीरनिधौ=क्षीर (दूध) समुद्र में, इन्दुः=चन्द्रमा के इव=समान, प्रसूतः=पैदा हुआ।

**हिन्दी**–पवित्र मनुवंश में अतिशय पवित्र क्षीरसागर में चन्द्रमा के समान, राजाओं में श्रेष्ठ, दिलीप नाम से प्रसिद्ध राजा पैदा हुआ।

**व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।**
**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः।।१३।।**

**प्रसङ्ग**–श्लोकेऽस्मिन् महाकविः कालिदासः राज्ञो दिलीपस्य शारीरिकवर्णनं करोति।

**अन्वयः**–व्यूढोरस्कः, वृषस्कन्धः, शालप्रांशुः, महाभुजः आत्मकर्मक्षमम्, देहम्, आश्रितः क्षात्रः, धर्म इव।

**सञ्जीविनी**–व्यूढं विपुलमुरो यस्य स व्यूढोरस्कः। "उरःप्रभृतिभ्यः कप्" इति कप् प्रत्ययः। "व्यूढं विपुलं मद्रं स्फारं समं वरिष्ठं च" इति यादवः। वृषस्य स्कन्ध इव स्कन्धो यस्य स तथा। "सप्तम्युपमान०" इत्यादिनोत्तरपदलोपी बहुव्रीहिः। शालो वृक्ष इव प्रांशुरुन्नतः शालप्रांशुः। "प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः" इति यादवः। "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः। महाभुजो महाबाहुः। आत्मकर्मक्षमं स्वव्यापारानुरूपं देहमाश्रितः प्राप्तः क्षत्रः क्षत्रसम्बन्धी धर्म इव स्थितः। मूर्तिमान्पराक्रम इव स्थित इत्युत्प्रेक्षा।

**चन्द्रिका**–व्यूढोरस्कः=विपुलवक्षास्थत्व, वृषस्कन्धः=वृषमांशः, शालप्रांशुः=अत्युन्नतः, महाभुजः आजानुबाहुः, आत्मकर्मक्षमम्=स्व-व्यापारा-नुरूपम्, देहम्=शरीरम्, आश्रितः=प्राप्तः, क्षात्रः=क्षत्रसम्बन्धी, धर्मः=कर्त्तव्यः, इव=यथा, तथा, स्थितः। क्षात्रधर्म एव दिलीपरूपेण अवस्थित इति भावः।

**समासः**–व्यूढम् उरो यस्य सः व्यूढोरस्कः। वृषस्य स्कन्ध इव स्कन्धो

यस्य सः वृषस्कन्धः। शाल इव प्रांशुः शालप्रांशुः। महान्तौ भुजौ यस्य सः महाभुजः। आत्मनः कर्म आत्मकर्म, आत्मकर्मणि क्षमः आत्मकर्मक्षमः, तम् आत्मकर्मक्षमम्।

**कोशः**—"स्कन्धो भुजशिरोः सोऽस्त्रि" "उच्चप्रांशून्नतोदग्राच्छ्रितास्तुङ्गे" "भुजबाहू" "प्रवेष्टो दोः स्याद्", कायो देहः क्लिवपुंसौः स्त्रियां मूर्तिस्तनुस्तनू इति चामरः। "व्यूढं" विपुलं भद्रं स्फारं समं वरिष्ठं च", "प्रकारवृक्षयोः - शालः शालः सर्जतरुः स्मृतः" इति च यादवः।

**शब्दार्थः**—व्यूढोरस्कः=चौड़ी छाती वाले, वृषस्कन्धः=बैलों के समान कन्धों वाले, शालप्रांशुः=शाल सेमर वृक्ष की तरह लम्बे, महाभुजः=लम्बी भुज ओं वाले, आत्मकर्मक्षमम्=अपने कार्य में समर्थ, देहम्=शरीर को, आश्रितः=प्राप्त किये हुए, क्षात्रः=क्षत्रिय सम्बन्धी, धर्मः=धर्म के, इव=समान।

**हिन्दी**—चौड़ी छाती वाले, बैलों के समान कन्धों वाले, शालवृक्ष की तरह लम्बे, बड़ी भुजओं वाले, अपने कार्य में कुशल शरीर को प्राप्त किये हुए क्षत्रिसयधर्म ने ही मानो शरीर धारण कर लिया हो।

**सर्वातिरिक्तसारेण सर्वतेजोभिभाविना।**
**स्थितः सर्वोन्नतेनोर्वी क्रान्त्वा मेरुरिवात्मना।।१४।।**

**प्रसङ्गः**—श्लोकेऽस्मिन् महाकविः कालिदासः राज्ञोदिलीपस्य तुलनां मरुपर्वतेन सह करोति—

**अन्वयः**—सर्वातिरिक्तसारेण, सर्वतेजोऽभिभाविना, सर्वोन्नतेन आत्मना, मरुः, इव, उर्वीम्, क्रान्त्वा स्थितः।

**सञ्जीविनी**—सर्वातिरिक्तसारेण सर्वेभ्यो भूतेभ्योऽधिकबलेन। "सारो बले स्थिराशे च" इत्यमरः। सर्वाणि भूतानि तेजसाभिभवतीति सर्वतेजोभिभावी तेन। सर्वेभ्य उन्नतेनात्मना शरीरेण "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" इति विश्वः। मेरुरिव। उर्वी क्रान्त्वाऽऽक्रम्य स्थितः। मेरावपि विशेषणानि

तुल्यानि। "अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृप:। तस्मादभिभवत्येष सर्वभूतानि तेजसा।" इति मनुवाचनाद्राज्ञ: सर्वतेजोभिभावित्वं ज्ञेयम।

**वाच्य:** ०-सर्वातिरिक्तसारेण सर्वतेजोभिभाविना सर्वोन्नतेनात्मना मेरुणेव, तेन उर्वी क्रान्त्वा अस्थायि।

**चन्द्रिका**-सर्वातिरिक्तसारेण=सकलाधिकबलेन, सर्वतेजोऽभिभाविना= अखिलप्रतापतिस्कारिणा सर्वोन्नतेन=निखिलोच्छ्रितेन, आत्मना=शरीरेण, मेरु:=कनकाचल:, इव=यथा, उर्वीम्=पृथिवीम्, क्रान्त्वा=व्याप्य, स्थित:= अवस्थित:।

**समास:**-सर्वेभ्य: अतिरिक्त: सर्वातिरिक्त:, सर्वातिरिक्त: सारो यस्य स: सर्वातिरिक्तसार:, तेन सर्वातिरिक्तसारेण। सर्वेषाम् तेजांसि सर्वतेजांसि, सर्वतेजसाम् अभिभावी सर्वतेजोऽभिभावी, तेन सर्वतेजोऽभिभाविना। सर्वेभ्य: उन्नत: सर्वोन्नत:, तेन सर्वोन्नतेन।

**कोश:**-"अतिरिक्त: समधिक:", "सारो बले स्थिरांशे च", "तेज: प्रभावे दीप्तौ च बले शुक्रेऽपि", "उच्चप्रांशून्नतोदग्रच्छ्रितास्तुङ्गे", "मेरु: सुमेरुर्हेमाद्री रत्नसानु: सुरालय:"। "सर्वसहा वसुमती वसुधोर्वी वसुन्धरा" इति चामर:। आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" इति विश्व:।

**शब्दार्थ:**-सर्वातिरिक्तसारेण=सबसे अधिक बलवान्, सर्वतेजोऽभि-भाविना=सबको अपने तेज से दबाने वाले, सर्वोन्नतेन=सबसे ऊंचे, आत्मना= शरीर से, मेरु:=सुमेरु के, इव=समान, उर्वीम्=पृथिवी को, क्रान्त्वा=व्याप्तकर, स्थित:=थे।

**हिन्दी**-सबसे अधिक बलवान्, सबको अपने तेज से नीचा दिखाने वाले सबसे ऊंचे शरीर के द्वारा सुमेरु की तरह पृथिवी को व्याप्त कर स्थित थे।

**आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।**

**आगमैः सदृशारम्भ आरम्भसद्रशोदयः।।१५।।**

**प्रसङ्गः**—सम्प्रति महाकविः कालिदासः नृपं दिलीपमाकृत्यनुरूपप्रजावन्तम्, प्रजानुरूपशास्त्रचिन्तकम्, शास्त्रानुकूलकर्म कर्तारम् कर्मनुरूपफलसिद्धमिति कथयति—

**अन्वयः**—आकारसदृशप्रज्ञः, प्रज्ञया सदृशागमः, आगमैः, सदृशारम्भेण, आरम्भसदृशोदयः।

**सञ्जीविनी**—आकारेण मूर्त्या सदृशी प्रज्ञा यस्य सः। प्रज्ञया सदृशागमः प्रज्ञानुरूपशास्त्रपरिश्रमः। आगमैः सदृश आरम्भः कर्म यस्य स तथोक्तः। आरभ्यत इत्यारम्भः कर्म। तत्सदृश उदयः फलसिद्धिर्यस्य स तथोक्तः।

**वाच्य०**—आकारसदृशप्रज्ञेन प्रज्ञया सदृशागमेन, आगमैः, सदृशाम्भेण, आरम्भसदृशोदयेन दिलीपेन अभावि।

**चन्द्रिका**—आकारसदृशप्रज्ञः=आकृत्यनुरूपमतिः, प्रज्ञया=मत्वा, सदृशागमः= प्रज्ञाऽनुसारशास्त्रपरिश्रमः, आगमैः=शास्त्रैः, सदृरशारम्भः= आगमाऽनुकूलकृतिः, आरम्भसदृशोदयः=आरम्भाऽनुरूपपरिणामः।

**समासः**—आकारेण सदृशी आकारसदृशी, आकारसदृशी प्रज्ञा यस्य सः आकारसदृशप्रज्ञः, सदृशः आगमः यस्य स सदृशागमः, सदृशः आरम्भो यस्य स सदृशारम्भः, आरम्भेण सदृशः आरम्भसदृशः आरम्भसदृशः उदयो यस्य सः आरम्भसदृशोदयः।

**कोशः**—"आकारविङ्गिताकृती", "वाच्यलिङ्गाः समस्तुल्यः सदृशः सदृशः सदृक्" "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः।" "प्रकमः स्यादुपक्रमः। स्यादभ्यादानमुद्घात आरम्भः" इति चामरः।

**शब्दार्थः**—आकारसदृशप्रज्ञः=आकृति के अनुरूप ही बुद्धिमान्,

प्रज्ञया=बुद्धि के, सदृशागम:=समान ही शास्त्राध्ययन वाले, आगमै:=शास्त्रों के, सदृशारम्भ:=अनुसार ही कर्त्तव्य वाले, आरम्भसदृशोदय:=कर्त्तव्यानुसार ही फल प्राप्त करने वाले।

**हिन्दी**–आकृति के अनुरूप बुद्धि, बुद्धि के अनुरूप शास्त्रचिन्तन, शास्त्रानुसार कर्त्तव्य तथा कर्त्तव्यानुसार फल वाले दिलीप थे।

**भीमकान्तैर्नृपगुणै: स बभूवोपजीविनाम्।**
**अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णव:।।१६।।**

**प्रसङ्ग:**–राजा दिलीपो भयानकमनोज्ञगुणै: युक्त आसीत्, यस्मात् स भवानकहेतौरनाश्रणीयो मनोज्ञहेतोराश्रवणीयश्चेति दर्शयति महाकवि कालिदास:।

**अन्वय:**–भीमकान्तै:, नृपगुणै: उपजीविनाम्, स: यादोरत्नै: अर्णव इव, अधृष्य: च, अभिगम्य: च बभूव।

**सञ्जीविनी**–भीमैश्च कान्तैश्च नृपगुणै: राजगुणैस्तेज: प्रतापदिभि: कुलशीलदक्षिण्यादिभिश्च स दिलीप उपजीविनामाश्रितानाम् यादोभिर्जलजीवै:। "यादांसि जलजन्तव:" इत्यमर:। रत्नैश्चार्णव इव। अधृष्योऽनभिगम्य आश्रयणीयश्च बभूव।

**वाच्य०**–तेन अधृष्येण च, अभिगम्येन च यादोरत्नैरर्णवेन इव बभूवे।

**चन्द्रिका**–भीमकान्तै:=भयानकमनोज्ञै:, नृपगुणै:=दानदाक्षिण्यादिभि:, स:=दिलीप:, उपजीविनाम्=आश्रितानम्, यादोरत्नै:=जलजन्तुमणिभि:, अर्णव:=समुद्र:, इव=यथा, अधृष्य:=असह्य:, च=पुन:, अभिगम्य:= आश्रयणीय:, च=पुन:, बभूव=अभूत्।

**समास:**–भीमाश्च कान्ताश्च भीमकान्ता: तै: भीमकान्तै:, नृपाणां गुणा: नृपगुणा: तै: नृपगुणै:, यादांसि च रत्नानि च यादोरत्नानि तै: यादोरत्नै:।

**कोश:**–"दारुणां भीषणं भीष्मं धोरं भीमं भयानकम्", "कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्", "राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षित: "मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसंध्यादिके गुण:", "यादांसि जलजन्तव:", "रत्नं

मणिर्द्वयोरश्म जातौ मुक्तादिकेऽपि च", "सरस्वान् सागरोऽर्णवः" इति चामरः।

**शब्दार्थः**–भीमकान्तैः=भयानक तथा मनोज्ञ, नृपगुवणैः=पार्थिवोचित गुणों दान, दाक्षिण्य आदि से, सः=दिलीपः, उपजीविनाम्=आश्रितों के लिए, यादोरत्नैः=जलजन्तु तथा मणियों से, अर्णवः=समुद्र की, इव=तरह, अधृष्यः=असह्य, च=और, अभिगम्यः=आश्रयणीय, च=भी, बभूव=हुए।

**हिन्दी**–जैसे समुद्र जल जन्तुओं के कारण अप्रवेश्य तथा मणिमुक्ताओं के कारण प्रवेश्य भी है वैसे ही राजा दिलीप भयानकता के कारण अनाश्रयणीय तथा मनोज्ञता के कारण आश्रणीय दोनों थे अर्थात् विरुद्ध स्वभावों का उनमें विलक्षण सम्मिश्रण था।

**रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।**

**न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः।।१७।।**

**प्रसङ्गः**–श्लोकेऽस्मिन् महाकविः कालिदासः राज्ञो दिलीपस्य प्रजानियन्तृत्वं दर्शयति–

**अन्वयः**–नियन्तुः तस्य तेमिवृत्तयः प्रजाः आमनोः क्षुण्णात् वर्त्मनः परम् रेखामात्रम्, अपि, न, व्यतीयुः।

**सञ्जीविनी**–नियन्तुः शिक्षकस्य सारथेश्च तस्य दिलीपस्य सम्बन्धिन्यो नेमीनां चक्रधाराणां वृत्तिरिव वृत्तिर्व्यापारो यासां ताः "चक्र धारा प्रधिर्नेमिः इति यादवः। "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्" इत्यमरः। प्रजाः आ मनोः मनुमारभ्येत्यभिविधिः पदद्वयं चैतत्। समासस्य विभाषितत्वात्। क्षुण्णदभ्यस्तात्प्रहताच्च वर्त्मन आचारपद्धतेरध्वनश्च परमधिकम्। इतस्तत, इत्यर्थः। रेखा प्रमाणमस्येति रेखामात्रं रेखाप्रमाणम्। ईषदपीत्यर्थः। 'प्रमाणे द्वयसज्दध्नञ् मात्रचः" इत्यनेन मात्रच्प्रत्ययः। परशब्दविशेषणं चैतत्। न व्यतीयुर्नातिक्रान्तवत्यः, कुशलसारथिप्रेषिता रथनेमय इव तस्य प्रजाः पूर्वक्षुण्ण मार्ग स्वल्पमपि न जहुरिति भावः।

**वाच्य:**–नियन्तुस्तस्य नेमिवृत्तिभिः प्रजाभिः आ मनोः क्षुण्णात् वर्त्मनः परं रेखामात्रमपि न व्यतीये।

**चन्द्रिका**–नियन्तुः=यन्तुः, सारथेर्वा तस्य=दिलीपस्य, नेमवृत्तयः= चक्रधाराव्यापाराः प्रजाः=साम्राज्याऽन्तर्गतजनाः आ मनोः=वैवस्वतमारभ्य, क्षुण्णात्=अभ्यस्तात्, प्रहताद् वा, वर्त्मनः=विधानात् मार्गात् वा, परम्=बहिः, रेखामात्रम्=लेखाप्रमाणम्, अपि न=नहि, व्यतीयुः=उल्लंघनञ्चक्रुः।

**समास:**–नेमीनां वृत्तिः नेमिवृत्तिः, नेमिवृत्तिरिव वृत्तिर्यासां ताः नेमिवृत्तयः।

**कोश:**–"नियन्ता प्राजिता यन्ता सूतः क्षता च सारथिः", "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्", "प्रजा स्यात्सन्ततौ जने", "अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः" इति चामरः। "चक्रधारः प्रधिर्नेमिः" इति यादवः।

**शब्दार्थ:**–नियन्तुः=शासक वा सारथी, तस्य=उस दिलीप की, प्रजाः=साम्राज्य में बसने वाली जनता ने, आ मनोः=वैवस्वतमनु से लेकर, क्षुण्णत्=अभ्यस्त वा प्रहत, वर्त्मनः=विधाव वा मार्ग से, परम्=बाहर, रेखामात्रम्=लकीर बराबर, अपि=भी, न=नहीं, व्यतीयुः=उल्लङ्घन किया।

**हिन्दी**–जैसे चतुर सारथी के द्वारा चलाये गये रथ के पहिये लकीर बराबर भी लीक के बाहर नहीं जाते हैं वैसे ही अच्छा शासक दिलीप की प्रजा ने भी वैवस्वत मनु से लेकर, नियमानुसार चलने में अभ्यस्त रञ्चमात्र भी मानव नियमों का उल्लंघन नहीं किया।

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः।।१८।।**

**प्रसङ्ग**–सम्प्रति राज्ञो दिलीपस्य प्रजाभ्यः करग्रहमस्योद्देश्यं दर्शयति महाकविः कालिदासः–

**अन्वयः**—सः प्रजानाम्, भूत्यर्थम्, एव, ताभ्यः बलिम्, अग्रहौत्, हि, रविः सहस्रगुणम्, उत्स्रष्टुम्, रसम्, आदत्ते।

**सञ्जीविनी**—स राजा प्रजानां भूत्या अर्थाय भूत्यर्थं बृद्धयर्थमेव। "अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या"। ग्रहणक्रियाविशेषणं चैतत्। ताभ्यः प्रजाभ्यो बलिं करम्, "भागधेयः करो बलिः" इत्यमरः। तथाहि रविः सहस्रं गुणा यस्मिन्नकर्मणि तद्यथा तथा सहस्रगुणं सहस्रधोत्स्रष्टुं दातुम्। उत्सर्जनक्रियाविशेषणं चैतत्। रसमम्ब्वादत्ते गृह्णाति। "रसो गन्धे रसे स्वादे तिक्तादौ विषरोगयोः। शृंगारादौ द्रवे वीर्ये देहधात्वम्बुपारदेः।" इति विश्वः।

**वाच्यः**—तेन प्रजानां भूत्यर्थमेव बलिरग्राहि, हि सहस्रगुणमुत्स्रष्टुं रविणा, रस आदीयते।

**चन्द्रिका:**—सः=दिलीपः, प्रजानाम्=साम्राज्यान्तर्वासिजनानाम् भूत्यर्थम्=उन्नत्यर्थम्, एव=निश्चये, ताभ्यः=प्रजाभ्यः, बलिम्=करम् (षष्ठांशरूपम्), अग्रहीत्=गृह्णाति स्म, हि=यतः, रविः=सूर्यः सहस्रगुणम्=दशश्वाधा, उत्स्रष्टुम्=दातुम्, रसम्=जलम्, आदत्ते=गृह्णाति।

**समासः**—भूत्यै इदम् भूत्यर्थम्, सहस्रं गुणाः यस्मिन् कर्मणि तत् सहस्रगुणम्।

**कोशः**—"प्रजा स्यात् सन्ततौ जने", भूतिर्भस्मनि सम्पदि" "भापक्षेयः करो बलिः", "भानुर्हसः सहस्रांशुस्तपनः सविता रविः" इति चामरः। "रसीगन्धे रसे स्वादे तिक्तादौ विषरोगयोः शृंगारादौ द्रवे वीर्ये देहधात्वम्बुपारदे।" इति विश्वः।

**शबदार्थः**—सः—वह दिलीप, प्रजानाम्=जनता के, भूत्यर्थम्=कल्याण के लिए, एव=ही, ताभ्यः=प्रजाओं से, बलिम्=कर, अग्रहीत्=लेता था, हि=जैसे कि, रविः=सूर्यः, सहस्रगुणम्=हजारगुना, उत्स्रष्टुम्=देने के लिए, रसम्=जल, आदत्ते=लेता है।

**हिन्दी**—जैसे सूर्य हजार गुणा अधिक देने (बरसाने) के लिए पृथिवी

से पानी लेता (खींचता) है वैसे राजा दिलीप जनता की भलाई के लिए ही उससे कर लेता था। अर्थात् जितना प्रजाओं से लेता था उससे हजार गुना अधिक देता था।

**सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम्।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता।।१९।।**

**प्रसङ्गः**—श्लोकेऽस्मिन् महाकविः कालिदास दिलीपस्य चतुरङ्गबलं गौणीकृत्य तस्य शास्त्रेष्वकुण्ठिता बुद्धिः, धनुष्यारोपिता मौर्वी चेति प्रयोजनसाधनद्वयस्य प्रशंसां करोति—

**अन्वयः**—तस्य, सेना, परिच्छदः, अर्थसाधनम्, द्वयम्, एव, शास्त्रेषु, अकुण्ठिता, बुद्धिः, च, धनुषि, आतता, मौर्वी।

**सञ्जीविनी**—तस्य राज्ञः सेना चतुरङ्गबलम्। परिच्छाद्यतेऽनेनेति परिच्छद उपकरणं बभूव। छत्रचामरादितुल्यमभूदित्यर्थः। "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययः। "छादेघेऽद्व्युपसर्गस्य" इत्युपधाह्रस्वः। अर्थस्य प्रयोजनस्य तु साधनं द्वयमेव। शास्त्रेष्वकुण्ठिताऽव्याहता बुद्धिः। "व्यापृता" इत्यपि पाठः। धनुष्याततााऽऽरोपिता "मौर्वी ज्या शिञ्जनी गुणः" इत्यमरः। नीतिपुरः सरमेव तस्य शौर्यमभूदित्यर्थः।

**वाच्य०**—तस्य सेनया परिच्छदेनाभावि, शास्त्रेष्वकुण्ठितया बुद्ध्या, धनुषि, आततया मौर्व्या चेति द्वयेनैवार्थसाधयेनाभावि।

**चन्द्रिका:**—तस्य=दिलीपस्य, सेना=चमूः परिच्छदः=आभरणम्, छत्रचामरादिवत्=शोभार्थमेवेति भावः, अर्थसाधनम्=प्रयोजनोपपादकम्, द्वयम्=उभयम्, एव अन्यव्यावृत्त्यर्थकमव्ययमेतत्। शास्त्रेषु=आगमेषु अकुण्ठिता=अव्याहता, बुद्धिः=मतिः, च=पुनः, धनुषि=चापे, आतता=आरोपिता, मौर्वी=ज्या।

**समासः**—अर्थस्य साधनम् अर्थसाधनम्, न कुण्ठिता अकुण्ठिता।

**कोश:**—"ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः। वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्।" "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।" "निवर्तनोपकरणानुव्रज्यासु च साधनम्।" "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः।" धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्।" "मौर्वी ज्या शिञ्जिनी गुणः" इति चामरः।

**शब्दार्थ:**—तस्य=उस दिलीप की, सेना=फौज; परिच्छदः=अलंकार मात्र थी। अर्थसाधनम्=प्रयोजन के लिए, द्वयम्=दो, एव=ही (थे), शास्त्रेषु=आगमों मे, अकुण्ठिता=अव्याहत, बुद्धिः=ज्ञान, च=और, धनुषि=चाप में, आतता=चढ़ी हुई, मौर्वी=डोरी।

**हिन्दी**—दिलीप की सेना आभरण मात्र थी। प्रयोजन साधने वाली तो उनके पास दो ही वस्तुएँ थीं—आगमों में अव्याहत बुद्धि और धनुष पर चढ़ी हुई डोरी।

**तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।**
**फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव।।२०।।**

**प्रसङ्गः**—अत्र महाकविः कालिदासः राज्ञो दिलीपस्य विचाराकृतिचेष्टा-दिव्यवहाराणां गोपनीयत्वं दर्शयति।

**अन्वयः**—संवृतमंत्रस्य, च गूढाकारेङ्गितस्य, तस्य, प्रारम्भाः प्राक्तनाः संस्कारा इव, फलानुमेयाः।

**सञ्जीविनी**—संवृतमन्त्रस्य गुप्तविचारस्य। "वेदभेदे गुप्तवादे मन्त्रः" इत्यमरः। शोकहर्षादिसूचको भृकुटिमुखरागादिराकारः इङ्गितं चेष्टितं हृदयगतविकारो वा। "इङ्गितं हृदगतो भावो बहिराकारा आकृतिः" इति सज्जनः। गूढे आकारेङ्गिते यस्य। स्वभावचापलाद् भ्रमपरम्परया मुखरागादिलिङ्गैर्वा तृतीयागामिमन्त्रस्य तस्य। प्रारभ्यन्त इति प्रारम्भाः सामाद्युपायप्रयोगाः। प्रगित्यव्ययेन तत्र भवाः प्राक्तनाः। "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ठ्युटॎुलौ तुट् च" इत्यनेने टॎुल्प्रत्ययः। संस्कारः पूर्वकर्मवासना इव। फलेन कार्येणानुमेया

अनुमातुं योग्य आसन्। अत्र याज्ञवल्क्यः-"मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम्। कुर्याद्यथा तत्र विदुः कर्मणामाफलोदयात्।" इति।

**वाच्य०**-तस्य प्रारम्भैः प्राक्तनैः संस्कारैः इव फलानुमेययैः अभावि।

**चन्द्रिका:**-संवृतमंत्रस्य=गुप्तविचारस्य, च=पुनः, गूढाकारेङ्गितस्य= गुप्ताकृतिवेष्टितस्य" तस्य=दिलीपस्य, प्रारम्भाः=सामाद्युपाय- प्रयोगाः प्राक्तनाः=पूर्वजन्मोपार्जिताः संस्काराः=भावनाः, इव=यथा, फलानुमेयाः= परिणामकल्पनीयाः। एतेन दिलीपस्य गाम्भीर्याऽतिशयत्वं द्योतितम्।

**समास:**-संवृतो मंत्रो यस्य सः संवृतमंत्रः यस्य संवृतमंत्रस्य, आकारश्च इङ्गितञ्च आकारेङ्गिते, गूड़े आकारेङ्गिते यस्य सः गूढाकारेङ्गितः तस्य गूढ़ाकारेङ्गितस्य फलेन अनुमेयाः फलानुमेयाः।

**कोश:**-"वेदभेदे गुप्तवादे मन्त्रो मित्रो स्वापति।" "निदिग्धोपचिते गूड़गुप्ते", "आकाशाविङ्गिताकृती", "आकारस्त्विङ्गः इङ्गितम्।"

**शब्दार्थ:**-संवृतमंत्रस्य=मंत्रणाओं को गुप्त रखने वाले, च=और, गूढाकारेङ्गितस्य=रूप तथा चेष्टा को छिपाने वाले, तस्य=उस दिलीप के, प्रारम्भाः=किये जाने वाले कार्य, प्राक्तनाः=पूर्व जन्म की, संस्काराः=वासनाओं की, इव=तरह, फलाऽनुमेयाः=परिणाम से ही समझे जाते थे।

**हिन्दी**-दिलीप अपने विचार, आकृति तथा चेष्टा को ऐसे छिपाये रखते थे कि पूर्वजन्म की वासनाओं की तरह परिणाम से ही कल्पना की जा सकती थी कि उन्होंने क्या किया अर्थात् उसके विचार, आकृति तथा चेष्टा गुप्त रहती थीं।

**जुगोपात्मानमंत्रस्तो भेजे धर्ममनातुरः।**
**अंगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत्।।२१।।**

**प्रसङ्ग:**-श्लोकेऽस्मिन् राजा दिलीपः कथं विधः तिष्ठन् सुखानुभवं करोतिस्मेति दर्शयति महाकविः कालिदासः-

**अन्वयः**–सः अत्रस्तः आत्मानम्, जुगोप, अनातुरः धर्मम्, भेजे, अपृध्नुः अर्थम्, आददे, असक्तः सुखम्, अन्वभूत्।

**सञ्जीविनी**–अत्रस्तोऽमीतः सन्। "त्रस्तोभीरुभीरुकभीलुकाः" इत्यमरः। त्रासोपाधिमन्तरेणेव त्रिवर्गसिद्धे प्रथमसाधनत्वादेवात्मानं शरीरं जुगोप रक्षितवान्। अनातुरोऽरुग्ण एव धर्मं सुकृतं भेजे। अर्जितवानित्यर्थः। अगृध्नुरगर्धनशील एवार्थमाददे स्वीकृतवान्। "गृध्नुस्तु गर्धनः। लुब्धोऽभिलाषुकस्तृष्णक्स-मौलोलुपलोलुभौ" इत्यमरः। "त्रसिगृधिवृषिक्षिपेःक्नुः" इति क्नुप्रत्ययः। असक्त आसक्तिरहित एव सुखमन्वभूत्।

**वाच्य०**–तेनात्रस्तेन "सता" आत्मा जुगुपे, अनातुरेण, "सता" धर्मो भेजे, अगृध्नुना "सता" अर्थः आददे, असक्तेन "सता" सुखमन्वभावि।

**चन्द्रिका**–सः=दिलीपः, अत्रस्तः=अभीतः, "सन्" इति शेषः। आत्मानम्=स्वम्, जुगोप=ररक्ष, अनातुरः=स्वस्थः "सन्" इति शेषः। धर्मम्=पुण्यम्, भेजे=सेवयामास, अगृध्नुः=अलुब्धः, "सन्" इति शेष। अर्थम्=धनम्, आददे=स्वीचकार, असक्तः=अलिशः, "सन्" इति शेषः। सुखम्=आनन्दम्, अन्वभूत्=अनुभूतवान्।

**समासः**–न त्रस्तः, अत्रस्तः, न आतुरः अनातुरः, न गृध्नुः अगृध्नुः, न सक्तः असक्तः।

**कोशः**–"त्रस्तो भीरुभौरुकभीलुकाः" "आमायावी विकृतो व्याधितोऽपटुः। "आतुरोऽभ्यमितोऽभ्यान्त", "स्याद्धर्ममस्त्रियां पुण्यश्रेयरी सुकृतं वृषः।" "गृध्नुस्तु गर्धनः। लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ।" "हिरण्यं द्रविणं द्युम्नपर्थरैविभवा अपि" इति चामरः। "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धो च परत्र्यावर्तनेऽपि च।।" इति धरणिः।

**शब्दार्थः**–सः=वह दिलीप, अत्रस्तः=निर्भय होकर, आत्मनम्=अपने को, जुगोप=रक्षा करता था, अनातुरः=स्वस्थ होकर, धर्मम्=धर्म की,

भेजे=सेवा करता था। अगृध्नुः=निर्लोभ होकर, अर्थम्=धन को, आददे=लेता था, असक्तः=निर्लिप्त रहकर, सुखम्=आनन्द का, अन्वभूत्=अनुभव करता था।

**हिन्दी**-राजा दिलीप निर्भय होकर अपनी रक्षा, स्वस्थ होकर धर्म की सेवा, निर्लोभ होकर धन का संग्रह तथा निर्लिप्त रहकर सुख का अनुभव करता था।

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।**
**गुणाः गुणानुबन्धित्वात्तस्य सप्रसवा इव।।२२।।**

**प्रसङ्गः**-श्लोकेऽस्मिन् राज्ञो दिलीपस्य विरुद्धा अपि गुणास्तस्मिन्नविरोधेनैव स्थिता इति निर्दिशति महाकविः कालिदासः-

**अन्वयः**-ज्ञाने, मौनम्, शक्तौ क्षमा, त्यागे श्लाघाविपर्ययः, तस्य गुणाः, गुणानुबन्धित्वात्, सप्रसवाः, इव।

**सञ्जीविनी**-ज्ञाने परवृत्तान्तज्ञाने सत्यपि मौनं वाङ्नियमनम्। यथाह कामन्दकः "नास्योपतापि वचनं मौनं व्रतचरिष्णुता" इति। शक्तौ प्रतीकारसामर्थ्येऽपि क्षमापकारसहनम्। अत्र चाणक्य "शक्तानां भूषणं क्षमा" इति। त्यागे वितरणे सत्यपि श्लाघाया विकत्थनस्य विपर्ययोऽभावः। अत्राह मनुः "न दत्वा परिकीर्तयेत्" इति। इत्थं तस्य गुणा ज्ञानादयो गुणैर्विरुद्धैर्मौनादिभिरनुबन्धित्वात्सहचारित्वात्। सह प्रसवो जन्म येषां ते सप्रसवाः सोदरा इवाभूवन्। विरुद्धा अपि गुणास्तस्मिन्नविरोधेनैव स्थिता इत्यर्थः।

**वाच्य०**-ज्ञाने मौनेन, शक्तौ क्षमया, त्यागे श्लाघाविपर्ययेण, तस्य गुणैः" गुणानुबन्धित्वात्, सप्रसवैरिव अभावि।

**चन्द्रिकाः**-ज्ञाने=बोधे, "सत्यपि" इति शेषः, एवमेवान्यत्राप्यूह्यम्, नम्=वाक्संयमः, शक्तौ=सामर्थ्ये, क्षमा=क्षान्तिः, त्यागे=दाने, श्लाघाविपर्ययः=आत्मप्रशंसाभावः, तस्य=दिलीपस्य, गुणाः=ज्ञानादयः, गुणाऽनुबन्धित्वात्=

मौनादिसाहचर्यात्, सप्रसवा=सोदराः इव=यथा, अभूवन्। विरुद्धधर्माणां दिलीपे सम्यक् समावेश इति भावः।

**समासः**—श्लाघायाः विपर्ययः श्लाघाविपर्ययः, गुणैः अनुबन्धित्वम् गुणानुबन्धित्वम् तस्मात् गुणानुबन्धित्वात्, सह प्रसवो येषां ते सप्रसवाः।

**कोशः**—"क्षितिक्षान्त्योः क्षमा", "अस्त्री चाटु चटुः श्लाधा प्रेम्णा मिथ्या विकत्थनम्", मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः", स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इति चामरः।

**शब्दार्थः**—ज्ञाने=जानकारी में, मौनम्=चुप रहना, शक्तौ=सामार्थ्य में भी, क्षमा=क्षन्ति, त्यागे=दान में, श्लाघाविपर्ययः=आत्मप्रशंसा का अभाव, तस्य=उस दिलीप के, गुणाः=ज्ञान आदि, गुणानुबन्धित्वात्=मौन आदि गुणों के साथ रहने से, सप्रसवाः=सहोदर, इव=समान।

**हिन्दी**—ज्ञान रहने पर भी चुप रहना, शक्ति रहने पर भी क्षमा करना, दान देने पर भी आत्मप्रशंसा न करना, ये उनके गुण मौन आदि विरोधी गुणों के साथ होने से सहोदर की तरह थे।

**अनाकृष्टस्य विषयैर्विद्यानां परदृश्वनः।**
**तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना।।२३।।**

**प्रसङ्गः**—सांसारिकविषयेष्वनासक्तः शास्त्रेषु पारङ्गतः, धर्मानुरागी महाराजो दिलीपो ज्ञानत एव वृद्ध आसीन्न तु जरावस्थात इति दर्शयति महाकविः कालिदासः—



**अन्वयः**—विषयैः अनाकृष्टस्य, विद्यानाम् पारदृश्वनः, धर्मरतेः तस्य, जरसा विना, वृद्धत्वम्, आसीत्।

**सञ्जीविनी**—विषयैः शब्दादिभिः "रूप शब्दो गन्धरसस्पर्शाश्च विषया अमी" इत्यमरः। अनाकृष्टस्यावशीकृतस्य विद्यानां वेदवेदाङ्गादीनां पारदृश्वनः पारमन्तं दृष्टवतः। दृशेः क्वनिप्। धर्मे रतिर्यस्य तस्य राज्ञो जरसा विना। "विस्रसा जरा" इत्यमरः। "षिद्भिदादिभ्योऽङ्" इत्यङ्प्रत्ययः, "जराया

जरसन्यतरस्याम्" इति जरसादेशः। वृद्धत्वं बार्द्धकमासीत्। तस्य यूनोऽपि विषयवैराग्यादिज्ञानगुणसंपत्या ज्ञानतो वृद्धत्वमासीदित्यर्थः। नाथस्तु चतुर्विधं वृद्धत्वमिति ज्ञात्वा "अनाकृष्टस्य" इत्यादिना विशेषणत्रयेण वैराग्यज्ञान-शीलवृद्धत्वान्युक्तानीत्यवोचत्।

**वाच्य०**–धर्मरतेस्तस्य जरसा विना वृद्धत्वेनाभावि।

**चन्द्रिका**–विषयैः=रूप-रसादिभिः, अनाकृष्टस्य=अवशीकृतचित्तस्य, विद्यानाम्= शास्त्राणाम, पारदृश्वनः=अन्तगामिनः, धर्मरतेः=सुकृतानुरक्तस्य, तस्य=दिलीपस्य, जरसा=विस्रसया, विना=अन्तरा, वृद्धत्वम्=स्थविरत्वम्, आसीत्=अभूत्।

**समासः**–न आकृष्टः अनाकृष्टः, तस्य अनाकृष्टस्य। धर्मे रतिः यस्य स धर्मरतिः, तस्य धर्मरतेः।

**कोशः**–"रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी।" "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः।" विस्रसा जरा। स्यात् स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्द्धकम्।" इति चामरः।

**शब्दार्थः**–विषयैः=सांसारिक विषय अर्थात् रूप, रस आदि से, अनाकृष्टस्य=उदासीन, विद्यानाम्=शास्त्रों के पारदृश्वनः=पारंगत, धर्मरतेः=पुण्यानुरागी, तस्य=उस दिलीप के, जरसा=वृद्धावस्था के, विना=न होने पर भी, "वृद्धत्वम्=बुढ़ापा, आसीत्=था।

**हिन्दी**–सांसारिक विषयों में अनासक्त, शास्त्रों के पारंगत, धर्मानुरागी महाराज दिलीप में वृद्धावस्था के बिना ही बुढ़ापा था। अभिप्राय यह है कि महाराज दिलीप अवस्था से नहीं ज्ञान से बूढ़े थे।

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि।**
**स पिता पितरस्तासां केवलं जन्महेतवः।।२४।।**

**प्रसङ्गः**–राजा दिलीपः पुत्रवत्प्रजानां पालनं करोति स्मेति निर्दिशति महाकविः कालिदासः–

**अन्वयः**—प्रजानाम्, विनयाधानात्, रक्षणात्, भरणात्, अपि, सः पिता, तासाम् पितरः केवलम्, जन्महेतवः।

**सञ्जीविनी**—प्रजायन्त इति प्रजा जनाः "उपसर्गे च संज्ञायाम्" इति डप्रत्ययः। "प्रजा स्यात्संततौ जने" इत्यमरः। तासां विनयस्य शिक्षाया आधानात्करणात् सन्मार्गप्रवर्तनादिति यावत्। रक्षणाद्भयहेतुभ्यस्त्राणात् आपन्निवारणादिति यावत्। भरणादन्नपानादिभिः पोषणादपि। अपिः समुच्चये। स राजा पिताऽभूत् तासां पितरस्तु जन्महेतवो जन्ममात्रकर्तारः। केवलमुत्पादका एवाभूवन्। जननमात्र एव पितृणां व्यापारः। सदा शिक्षारक्षणादिकं तु स एव करोतीति तस्मिन्पितृत्वव्यपदेशः। आहुश्च—"स पितायस्तु पोषकः" इति।

**वाच्य०**—प्राजानां विनयाधानात् भरणात् रक्षणादपि तेन पित्राऽभूयत, तासां पितृभिः जन्महेतुभिरभूयत।

**चन्द्रिकाः**—प्रजानाम्=साम्राज्यान्तर्गतजनानाम्, विनयाधानात् नम्रता-स्थापनात्, रक्षणात्=त्राणात्, भरणात्=पोषणात्, अपि=च "अपिः" समुच्चये। सः=दिलीपः, पिता=जनकः "अभूत्" इति शेषः। तासाम्=प्रजानाम्, पितरः=जनकाः, केवलम् जन्महेतवः=उत्पत्ति कारणानि" "अभूवन्" इति शेषः।

**समासः**—विनयस्य आधानम् विनयाधानम् तस्मात् विनयाधानात्। जन्मनः हेतवः जन्महेतवः।

**कोशः**—'प्रजा स्यात्सन्ततौ जने", 'तातस्तु जनकः पिता", जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः।" "हेतुर्ना कारणं बीजम्" इति चामरः।

**शब्दार्थः**—प्रजानाम्=जनता को, विनयाधानात्=नम्रता सिखाने से, रक्षणात्=रक्षा करने से, भरणात्=पोषण करने से, अपि=और, सः=वह राजा दिलीप, पिता=जनक, अभूत्= था, तासाम्=उनके, पितरः=माता-पिता, केवलम्=मात्र, जन्महेतवः=जन्म देने वाले।

**हिन्दी**–प्रजाओं को नम्रता सिखाने से, रक्षा करने से और पालन–पोषण करने से राजा दिलीप ही वस्तुतः प्रजाओं के पिता थे। उनके पिता तो केवल जन्म देने वाले थे। अभिप्राय यह है कि दिलीप प्रजाओं की पुत्रवत् रक्षा करते थे।

**स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये।**
**अप्यर्थकामौ तस्यास्तां धर्म एवं मनीषिणः।।२५।।**

**प्रसङ्गः**–अर्थकामसाधनयोः दण्डविवाहयोः लोकस्थापनप्रजोत्पादनरूप–धर्मार्थत्वेनानुष्ठानादर्थकामावपि धर्मशेषतामापादयन् स राजा दिलीपो धर्मोत्तरोऽभूदिति निर्दिशति महाकविः कालिदासः।

**अन्वयः**–स्थित्यै, दण्ड्यान्, दण्डयतः, प्रसूतये परिणेतुः मनीषिण तस्य, अर्थकामौ, अपि, धर्म एव, आस्ताम्।

**सञ्जीविना**–दण्डमर्हन्तीति दण्ड्याः "दण्डादिभ्यो यः" इति यप्रत्ययः। अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरक चैव गच्छति।।" इति शास्त्रवचनात्। तान् दण्ड्यानेव स्थित्यै लोक प्रतिष्ठायै दण्डयतः शिक्षयतः। प्रसूतये सन्तानायैव परिणेतुर्दारान्परिगृह्णतः। मनीषिणो विदुषः दोषज्ञस्येति यावत्। "विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः। "धीरो मनीषी" इत्यमरः। तस्य दिलीपस्यार्थकामावपि धर्म एवास्तां जातौ। अस्तेर्लङ्। अर्थकामसाधनयोर्दण्डविवाहयोर्लोकस्थापनप्रजोत्पादनरूप–मार्थत्वेनानुष्ठानादर्थकामावपि धर्मशेषतामापादयन्स राजा धर्मोत्तरोऽभूदित्यर्थः। आह च गौतमः "न पूर्वाह्णमध्यंदिनापराह्णानफलान्कुर्यात् यथाशक्ति धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात्" इति।

**वाच्य०**–मनीषिणस्तस्य अर्थधर्माभ्यामपि धर्मेणैव अभूयत।

**चन्द्रिकाः**–स्थित्यै=प्रतिष्ठायै, दण्ड्यान्=अपराधिनः, दण्डयतः=शिक्षयतः, प्रसूतये=सन्तानाय, परिणेतुः=कृतदारपरिग्रहस्य, मनीषिणः=विदुषः, दिलीपस्य, अर्थकामौ=तदाख्यपुरुषार्थौ, अपि, धर्मः=तदाख्यपुरुषार्थः, एव=निश्चयेन,

आस्ताम्=अभूताम्। दिलीपस्य अर्थकामार्थमपिप्रवृत्तिः **धर्म**मूलिकैवेति भावः।

**समासः**–अर्थश्च कामश्च इति अर्थकामौ।

**कोशः**–"विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः। धीरो मनीषी", "इच्छामनोभवौ कामौ", "स्याद् धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः।" इति चामरः। "अर्थो हेतौ प्रयोजने। निवृत्तै विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैमः।

**शब्दार्थः**–स्थित्यै=प्रतिष्ठा के लिए, दण्ड्यान्=अपराधियों को दण्डयतः=दण्ड देने वाले, प्रसूतये=सन्तान के लिए, परिणेतुः=विवाह करने वाले, मनीषिणः=विद्वान्, तस्य=उस (दिलीप) के, अर्थकामौ=अर्थकाम नाम के पुरुषार्थ, अपि=भी, धर्मनाम के पुरुषार्थ, एव=ही, आस्ताम्=थे।

**हिन्दी**–लोक प्रतिष्ठा के लिए अपराधियों को दण्ड देने वाले, सन्तान के लिए शादी करने वाले विद्वान् राजा दिलीप के अर्थकाम नाम के पुरुषार्थ भी धर्म नाम के पुरुषार्थ ही थे।

**दुदोह गां स यज्ञाय सस्याय मघवा दिवम्।**
**संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम्।।२६।।**

**प्रसङ्गः**–महाराजा दिलीपः यज्ञैरिन्द्रलोकमिन्द्रश्च भूलोकं पुपोषति कथयति महाकविः कालिदासः–

**अन्वयः**–सः यज्ञाय, गाम्, दुदोह, मघवा, सस्याय, दिवम्, उभौ-संपद्विनिमयेन, भुवनद्वयम्, दधतुः।

**सञ्जीविनी**–स राजा यज्ञाय यज्ञं कर्तुं गां भुवं दुदोह। करग्रहणेन रिक्तां चकारेत्यर्थः, मघवा देवेन्द्रः सस्याय सस्यं वर्धयितुं दिवं स्वर्गं दुदोह। द्युलोकान्महीलोके वृष्टिमुत्पादयामासेत्यर्थः। "क्रियार्थोपपदस्य०" इत्यादिना यज्ञसस्याभ्यां चतुर्थी। एवमुभौ संपदो विनिमयेन परस्परं आदानप्रतिदानाभ्यां भुवनद्वयं दधतुः पुपुषतः। राजा यज्ञैरिन्द्रलोकमिन्द्रश्चोदकेन भूलोकं पुपोषेत्यर्थः।

उक्तं च दण्डनीतौ–"राजा त्वर्थान्समाहृत्य कुर्यादिन्द्रमहोत्सवम्। प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत्।।" इति।

**वाच्य०**–तेन यज्ञाय गौर्दुदुहे, मघोना, सस्यार्थं, द्यौः "दुदुहे" उभाभ्या सम्पद्विनिमयेन भुवनद्वयं दधे।

**चन्द्रिका**–स=दिलीपः, यज्ञाय=क्रतवे, गाम्=पृथिवीम्, दुदोह=अदुहत्, करमादाय रिक्ताञ्चकारेति भावः। मघवा=इन्द्रः, सस्याय=धान्याय, दिवम्=स्वर्गम्, "दुदोह" इत्यनुसन्धीयते। वृष्टिं कारयामासेति भावः। उभौ=इन्द्रदिलीपौ, सम्पद्विनिमयेन=वस्तुन आदानप्रदानाभ्यां भुवनद्वयम्=स्वर्गमर्त्याख्यम्, दधतुः=पुपुषतुः। परस्परं किञ्चिद् दत्वा कस्यचिद्ग्रहणमेव विनिमयः। दिलीपः यज्ञैः स्वर्गं इन्द्रः वृष्ट्या मर्त्यलोकं पुपोषेत्यभिप्रायः।

**समासः**–सम्पदः विनिमयः सम्पद्विनिमयः, तेन सम्पद्विनिमयेन। भुवनयोर्द्वयं भुवनद्वयम्, तत्।

**कोशः**–"यज्ञ सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः", "इन्द्रौ मरुत्वान् मघवा विडौजाः पाकशासनः।" वृक्षादीनां फलं सस्यम्", सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्", "सम्पदिः सम्पत्तिः श्रीश्च लक्ष्मीश्च", जगती लोको विष्टपं भुवनं जगत्" इति चामरः।

**शब्दार्थः**–सः=वह (राजा दिलीप), यज्ञाय=यज्ञ के लिए, गाम्=पृथिवी को, दुदोह=दुहता था, मघवा=इन्द्र, सस्याय=अन्न के लिए, दिवम्=स्वर्ग को, उभौ=दोनों (इन्द्र और दिलीप), सम्पद्विनिमयेन=यज्ञ और वृष्टि के आदान-प्रदान से, भुवनद्वयम्=स्वर्ग तथा मर्त्यलोक का, दधतुः=पालन-पोषण करते थे।

**हिन्दी**–राजा दिलीप यज्ञ के लिए पृथिवी को दहुते थे, अर्थात् प्रजा से कर वसूल करते थे बदले में इन्द्र अन्न के लिए स्वर्ग को दुहते थे, अर्थात् स्वर्ग से पृथिवी पर वृष्टि करते थे, इस प्रकार इन्द्र तथा दिलीप स्वर्ग और मर्त्यलोक का पालन-पोषण करते थे।

**न किलानुययुस्तस्य राजानो रक्षितुर्यशः।**
**व्यावृत्ता यत्परस्वेभ्यः श्रुतो तस्करता स्थिता।।२७।।**

**प्रसङ्गः**–राज्ञो दिलीपस्य राज्ये दस्करता नासीदिति निर्दिशति महाकविः कालिदासः–

**अन्वयः**–राजानः रक्षितुः तस्य, यशः न अनुययुः किल, यत्, तस्करता, परस्वेभ्यः, व्यावृत्ता, श्रुतौ, स्थिता।

**सञ्जीविनी**–राजानोऽन्ये नृपा रक्षितुर्भयेभ्यस्त्रातुस्तस्य राज्ञो यशो नानुययुः किल नानुचक्रुः खलु। कुतः ? यद्यस्मात्कारणात्तस्करता चौर्यं परस्वेभ्यः परधनेभ्यः स्वविषयभूतेभ्यो व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता। अपहार्यान्तराभावात्तस्करशब्द एवापहृत इत्यर्थः। अथवा "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति न्यायेन शब्दे स्थिता स्फुरिता न तु स्वरूपतोऽस्तीत्यर्थः।

**वाच्य०**–राजभिः रक्षितुस्तस्य यशः नानुयये किल, यत्, तस्करतया परस्वेभ्यो व्यावृत्तया "सत्या" श्रुतौ स्थितयाऽभावि।

**चन्द्रिका**–राजानः=अन्ये नृपाः, रक्षितुः=त्रातुः, तस्य दिलीपस्य, यशः=कीर्तिम्, न=नहि, अनुययुः=अनुचक्रुः, किल=खलु, किल इति वाक्यालङ्कारे पादपूरणे वा। यशोधनस्य तस्य यशः नानुचक्रुरिति भावः। यत्=यस्मात्, तस्करता=चौर्य्यम्, परस्वेभ्यः अन्यदीयधनेभ्यः, व्यावृत्ता=पराङ्मुखी भूता, "सती" इति शेषः। श्रुतौ=कर्णे, "एव" इति पूरणीयम्। स्थिता=आसीत्। राज्येऽस्मिन् न कोऽपि कस्यापि धनं चोरयतीति तस्करता केवलं श्रुतिविषयैवेति भावः।

**समासः**–परेषां स्वाः परस्वाः, तेभ्यः परस्वेभ्यः।

**कोशः**–"यश कीर्तिः समज्ञा च", "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽत्रियां धने" इति चामरः। "परः श्रेष्ठारिदूरान्योत्तरे क्लीवं तु केवले।" इति भेदिनी। "श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि" इति विश्वः।

**शब्दार्थः**—राजानः=दूसरे राजे, रक्षितुः=रक्षा करने वाले, तस्य=उस दिलीप की, यशः कीर्तिको, न=नहीं, अनुययुः=अनुकरण किये चुराये, किल, "किल" शब्द कहीं पादपूर्ति के लिए और कहीं वाक्य की शोभा बढ़ाने के लिए प्रयुक्त होता है। यत्=जिस लिये कि, तस्करता=चोरी, परस्वेभ्यः=दूसरे के धन से, व्यावृत्ता=हटकर, श्रुतौ=कान में, स्थिता=रहती थी।

**हिन्दी**—राजाओं ने रक्षा करने वाले उस दिलीप के यश का अनुकरण नहीं किया, अर्थात् यश को नहीं चुराया, क्योंकि चोरी दूसरे के धन से हटकर कानों में ही रहती थी। भावार्थ है कि दिलीप के राज्य में चोरी नहीं होती थी।

**द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम्।**

**त्याज्यो दुष्टः प्रियोऽप्यासोदङ्गुलीवोरगक्षता।।२८।।**

**प्रसङ्ग**—श्लोकेऽस्मिन् महाकविः कालिदासः राज्ञो दिलीपस्य शिव एव बन्धुः दुष्ट एव शत्रुरिति निर्दिशति—

**अन्वयः**—शिष्टः द्वेष्यः अपि, आर्तस्य, ओषधम्, यथा, तस्य, सम्मतः आसीत् दुष्टः प्रियः अपि, उरगक्षता, अङ्गुली, इव, त्याज्यः (आसीत्)।

**सञ्जीविनी**—शिष्टो जनो द्वेष्यः शत्रुरपि। आर्तस्य रोगिण औषधं यथौषधमिव। तस्य संमतोऽनुगत आसीत्। दुष्टो जनः प्रियोऽपि प्रेमास्पदीभूतोऽपि। उरगक्षता सर्पदष्टांगुलीव्। "छिन्द्याद् बापुमपि दुष्टमात्मनः" इति न्यायात् त्याज्य आसीत्। तस्य शिष्ट एव बन्धुर्दुष्ट एव शत्रुरित्यर्थः।

**वाच्य०**—शिष्टेन द्वेष्येणापि, औषधेन तथा तस्य सम्मतेनाभूयत, दुष्टेन प्रियेणापि, उरगक्षतया अंगुल्या इव, त्याज्येन अभूयत।

**चन्द्रिका**—शिष्टः=सज्जनः, द्वेष्यः=शत्रुः, अपि, आर्तस्य=रोगिणः, औषधम्=भेषजम्, यथा=इव, तस्य=दिलीपस्य, संमतः=ग्राह्यः, आसीत्=अभूत्,

दुष्ट:=दुर्जन:, प्रिय:=इष्ट:, अपि, उरगक्षता=सर्पदष्टा, आङ्गुली=करशाखा, इव=यथा, त्याज्य:=हेय:, आसीत्।

**समास:**–उरगेण क्षता उरगक्षता।

**कोश:**–"भेषजौषधभैषज्यानि" "अङ्गुल्य: करशाखा: स्यु" इति चामर:।

**शब्दार्थ**–शिष्ट:=सज्जन, द्वेष्य:=द्वेष करने योग्य होने पर, अपि=भी, आर्त्तस्य=रोगी को, औषधम्=दवा के, यथा=समान, तस्य=उस (दिलीप) को सम्मत:=प्रिय, आसीत्=था, दुष्ट:=दुर्जन, प्रिय:=इष्ट होने पर, अपि=भी, उरगक्षता=साँप से कटी, अङ्गुली=अङ्गुली के, इव=समान्, त्याज्य= उपेक्षणीय, आसीत्=था।

**हिन्दी**–दिलीप को सज्जन शत्रु होने पर भी रोगी को कड़ुवी औषधि के समान प्रिय था और दुष्ट पुरुष इष्ट होने पर भी साँप से डँसी उँगुली जैसा त्याज्य था।

**तं वेधा विदधे नूनं महाभूतसमाधिना।**
**तथा हि सर्वे तस्यासन्परार्थैकफला गुणा:।।२९।।**

**प्रसङ्ग:**–अत्र महाकवि: कालिदास: राज्ञो दिलीपस्य सर्वे गुणा: रूपरसादिमहाभूतगुणवदेव परगयोजना एव आसन्निति दर्शयति।

**अन्वय:**–वेधा:, तम्, महाभूतसमाधिना, विदधे, नूनम्, तथाहि, तस्य, सर्व, गुणा:, परार्थैकफल:, आसन्।

**सञ्जीविनी**–वेधा: स्रष्टा। "स्रष्टा प्रजापतिर्वेधा" इत्यमर:। तं दिलीपम्। समाधीयतेऽनेनेति समाधि: कारणसामग्री। महाभूतानां य: समाधिस्तेन महाभूतसमाधिना विददे ससर्ज। नूनं ध्रुवम् इत्युत्प्रेक्षा। तथाहि। तस्य राज्ञ: सर्वे गुणा रूपरसादिमहाभूतगुणवदेव परार्थ: परप्रयोजनमेवैकं मुख्यं फलं येषां ते तथोक्ता आसन्। महाभूतगुणोपमानेन कारणगुणा: कार्यं संक्रामन्तीति न्याय: सूचित:।

**वाच्य॰**–वेधसा स विधदे सर्वै: गुणै: परार्थैकफलैरभूयत।

**चन्द्रिका**–वेधा: =ब्रह्मा, तम् =दिलीपम्, महाभूतसमाधिना= पृथिव्यादिपञ्चकारणसामग्र्या, विदधे=ससर्ज, नूनम्=ध्रुवम्, तथाहि=यत:, तस्य=दिलीपस्य, सर्वे=यावन्त:, गुणा: =दानदाक्षिण्यादय:, रूप -रसादिमहाभूत -गुणवत्, परार्थैकफला: =अन्यप्रयोजना एव, आसन्=अभूवन्।

**समास:**–महान्तश्च ते भूताश्च महाभूता:, महाभूतानां समाधि: महाभूतसमाधि:, तेन महाभूतसमाधिना परस्य अर्थ: परार्थ:, परार्थ: एव एकं फल येषाम् ते परार्थैकफला:।

**कोश:**–"स्रष्टा प्रजापतिर्वेधा:" इत्यमर:, "भूते क्ष्माऽऽदौ पिशाचादौ न्याय्ये सत्योपमानयो:", "नूनं निश्चिततर्कयो:" इति च विश्व:। "अर्थो हेतौ प्रयोजने" इति हैम:।

**शब्दार्थ:**–वेधा: =ब्रह्मा ने, तम्=उस (दिलीप) को, महाभूत समाधिना=महाभूतों (क्षिति, जल, पावक, गगन, समीर) की कारणसामग्री से, विदधे=निर्माण किया, नूनम्=निश्चित है, तथाहि=क्योंकि, तस्य=उस (दिलीप) के, सर्वे=सब, गुणा: =दाक्षिण्य आदि, परार्थैकफला: =दूसरों के प्रयोजन के लिए नहीं, आस=थे।

**हिन्दी**–इसलिए कि–दिलीप के सब गुण दूसरों के लिये ही थे, ब्रह्मा ने पञ्चमहाभूतों की कारणसामग्री से दिलीप का निर्माण किया यह निश्चत है, क्योंकि पञ्चमहाभूतों के गुण (रूप रस आदि) भी दूसरों के लिए ही होते हैं।

**स वेलावप्रवलयां परिखाकृतसागाराम्।**

**अनन्यशासनामुर्वीं शशासैकपुरोमिव।।३०।।**

**प्रसङ्ग:**–श्लोकेऽस्मिन् राज्ञो दिलीपस्य सकलमहीमण्डलशासकत्वं निर्दिशति महाकवि: कालिदास:–

**अन्वयः**—सः, वेलावप्रबलयाम्, परिखीकृतसागराम्, अन्यशासनाम्, उर्वीम् एकपुरीम्, इव, शशास।

**सञ्जीविनी**—स दिलीपः। वेलाःसमुद्रकूलानि। "वेला कूलेऽपि वारिधे" इति विश्वः। ता एव वप्रवलयाः प्राकारवेष्टनानि यस्यास्ताम्। "स्याच्चयो वप्रमस्त्रियाम्। प्राकारो वरणः लालः प्राचीनम् प्रान्ततो वृतिः।।" इत्यमरः। चरितः खातं परिखा दुर्गवेष्टनम्। "खातं खेयं तु परिख" इत्यमरः। "अन्येष्वपि दृश्यते" इत्यत्रापिशब्दात्खनेर्डप्रत्ययः। अपरिखाः परिखाः संपद्यमानाः कृताः परिखीकृताः सागरा यस्यास्ताम्। अभूततद्भावे च्विः। अविद्यमानमनयस्य राज्ञः शासनं यस्यास्तामनन्यशासनामुर्वीमेकपुरीमिव शशास। अनायासेन शासितवानित्यर्थः।

**वाच्य०**—सः, वेलावप्रवलयापरिखिकृतसागराऽनन्यशासनोर्वी एकपुरीव शशसे।

**चन्द्रिका**—सः=दिलीपः, वेलावप्रवलयाम्=समुद्रकूलप्राकारवेष्टनाम्, परिखीकृतसागराम्=दुर्गवेष्टनीकृतसमुद्राम्, अनन्यशासनाम्= शासकान्तररहिताम्, उर्वीम्=पृथिवीम्, एकपुरीम्=एकनगरीम्, इव=यथा, शशास=शासितवान्।

**समासः**—वप्राणि एव वलयाः, वप्रवलयाः, वेला एव वप्रवलयाः यस्याः सा वेलावप्रवलया, ताम् वेलावप्रवलयाम्। न परिखाः अपरिखाः अपरिखाः, परिखाः सम्पद्यमानाः कृता परिखीकृताः, परिखीकृताः सागराः यस्याः सा परिखीकृतसागरा, ताम् परिखीकृतसागराम्। अन्यस्य शासनम् अन्यशासनम्, अविद्यमानम् अन्यशासनम् यस्याः सा अनन्यशासना, ताम् अनन्यशासनाम्। एका च असौ पुरी च एकपुरी, ताम् एकपुरीम्।

**कोशः**—"स्याच्चयो वप्रमस्त्रियाम्। प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः" "खेयं तु परिखा", "उदन्वानुदधिः सिन्धु सरस्वान् सागरोऽर्णवः "परः श्रेष्ठारिदूरान्योत्तरे क्लीबे तु केवले", "सर्वसहा वसुमती वसुधोर्वी

वसुन्धरा", "पुरीनगर्य्यौं वा पत्तनं पुटभेदनम्" इति चामरः। "वेला कूलेऽपि वारिधे इति विश्वः।

**शब्दार्थः**—सः=उस (राजा दिलप) ने, वेलावप्रवलयाम्=समुद्रतट रूपी दीवाल से घिरी हुई, परिखीकृतसागराय=समुद्ररूपी खाईवाली, अनन्य-शासनाम्=दिलीप मात्र के द्वारा शासित, उर्वीम्=पृथ्वी को, एकपुरीम्=एक नगर की, इव=तरह, शशास=शासन किया।

**हिन्दी**—राजा दिलीप ने समुद्रतट रूपी परकोटों से घिरी हुई, समुद्ररूपी खाईवाली, दूसरों से अशासित पृथिवी का एक नगर के समान शासन किया।

**तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा।**
**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा।।२१।।**

**प्रसङ्गः**—श्लोकेऽस्मिन् महाकविः कालिदासः यज्ञस्य दक्षिणारव्या पत्नीव सुदक्षिणेति प्रसिद्धा राज्ञो दिलीपस्य पत्न्यासीदिति कथयति—

**अन्वयः**—तस्य, मगधवंशजा, दाक्षिण्यरूढेन, नाम्ना, अध्वस्य, दक्षिणा, पत्नी, इव, सुदक्षिणा, इति "पत्नी" आसीत्।

**सञ्जीविनी**—तस्य राज्ञो मगधवंशे जाता मगधवंशजा। "सप्तम्यां जनेर्डः" इति डप्रत्ययः। एतेनाभिजात्यमुक्तम्। दाक्षिण्यं परच्छन्दानुवर्तनम्। "दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु" इति शाश्वतः। तेन रूढं प्रसिद्धम्। तेन नाम्ना। अध्वरस्य यज्ञस्य दक्षिणा दक्षिणारव्या पत्नीव सुदक्षिणेति प्रसिद्धा पत्न्यासीत्। अत्र श्रुतिः—"यज्ञो गन्धर्वस्तस्य दक्षिणाप्सरसः" इति। "दक्षिणाया दाक्षिण्यं नामर्त्विजो दक्षिणत्वप्रापकत्वम्। दक्षन्ते दक्षिणां प्रतिगृह्य" इति च।

**वाच्य०**—तस्य मगधवंशजयाऽध्वरस्य दक्षिणयेव पत्न्या सुदक्षिणयाऽभूयत।

**चन्द्रिका**—तस्य=दिलीपस्य, मगधवंशजा=मगधकुलोत्पन्ना, दाक्षिण्य-रूपेण=परच्छन्दाऽनुवर्त्तनप्रसिद्धेन, नाम्ना=संज्ञया, अध्वरस्य=यज्ञस्य, दक्षिणा=

दक्षिणाख्या, पत्नी=भार्या, इव=यथा, सुदक्षिणा=सुदक्षिणाख्या, इति=प्रसिद्धा, "पत्नी" इति शेष:। आसी:त्=अभूत्।

**समास:**–मगधानाम् वंश: मगधवंश:, मगधवंशे जाता मगधवंशजा। दाक्षिण्येन रूढम् दाक्षिण्यरूढम्, तेन दाक्षिण्यरूढेन।

**कोश:**–"वंशोऽन्ववाय: सन्तान:", "पत्नी पाणिगृहीती च द्वितीया सह धर्मिणी" इति चामर:। "दक्षिण: सरलोदारच्छन्दाऽनुवर्तिषु" इति शाश्वत:।

**शब्दार्थ:**–तस्य=उस (राजा दिलीप) की, मगधवंशजा=मगधवंश में उत्पन्न, दाक्षिण्यरूढेन=दूसरों के मनोऽनुकूल कार्य करने में प्रसिद्ध, नाम्ना=नाम से, अध्वरस्य=यज्ञ की, दक्षिणा=दक्षिणा नाम की, पत्नी=भार्या के, इव=समान, सुदक्षिणा=सुदक्षिणा नाम से, इति=प्रसिद्ध, पत्नी=भार्या, आसीत्=थी।

**हिन्दी**–उस राजा दिलीप की मगध कुल में उत्पन्न, पति के मनोनुकूल कार्य करने में प्रसिद्ध यज्ञ की दक्षिणा नाम की पत्नी के समान सुदक्षिणा नाम की पत्नी थी।

**कलत्रवन्तमात्मानमवरोध महत्यापि।**
**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिप:।।३२।।**

**प्रसङ्ग:**–राजा दिलीप: सुदक्षिणया लक्ष्म्या च आत्मानं भार्यावन्तं स्वीचकारेति निर्दिशति महाकवि: कालिदासोऽत्र।

**अन्वय:**–वसुधाधिप:, अवरोधे, महति, अपि, मनस्विन्या, तया, लक्ष्म्या, च, आत्मानम्, कलत्रवन्तम्, मेने।

**सञ्जीविनी**–वसुधाधिप:। अवरोधेऽन्त:पुरवर्गे महति सत्यपि मनस्विन्या दृढचित्तया। परचित्तानुवृत्यादिनिर्बन्धक्षमयेत्यर्थ:। तया सुदक्षिणया लक्ष्म्या चात्मानं कलत्रवन्तं भार्यावन्तं मेने। "कलत्रं श्रोणिभार्ययो:" इत्यमर:। वसुधाधिप इत्यनेन वसुधया चेति गम्यते।

**वाच्य०**–वसुधाऽधिपेन आत्मा कलत्रवान् मेने।

**चन्द्रिका**—वसुधाधिपः=पृथिवीपतिः (दिलीपः), अवरोधे=अन्तःपुरवर्गे, महति=अधिके, अपि=सत्यपि, मनस्विन्या=दृढचित्तया, तथा=सुदक्षिणया, लक्ष्म्या=राज्यश्रिया, च=पुनः, आत्मानम्=स्वम्, कलत्रवन्तम्=भार्यावन्तम्, मेने=स्वीचकार, ज्ञातवान्।

**समासः**—वसुधायाः अधिपः वसुधाधिपः। कलत्रम् अस्यास्तीति कलत्रवान्, तम् कलत्रवन्तम्। प्रशस्तं मनः अस्याः अस्तीति ममस्विनी, तया मनस्विन्या।

**कोशः**—"वसुधोर्वी वसुन्धरा", "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च", "संपत्तिः श्रीश्च लक्ष्मीश्च", "कलत्रं श्रोणिभार्ययोः" इति चामरः।

**शब्दार्थः**—वसुधाधिपः=पृथिवीपति (राजा दिलीप), अवरोध=अन्तःपुरवर्ग के, महति=अधिक संख्या में, अपि=होने पर भी, मनस्विन्या=दृढचित्त वाली, तया=उस (सुदक्षिणा) से, लक्ष्म्या=राजलक्ष्मी से, च=और, अत्मानम्=अपने को, कलत्रवन्तम्=भार्याओं वाला, मेने=मानते थे।

**हिन्दी**—अनेक रानियों के रहते हुए भी राजा दिलीप अच्छे मन वाली सुदक्षिणा और राज्यलक्ष्मी इन दोनों से ही अपने को भार्याओं वाला मानते थे।

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः।**
**विलम्बितफलैः कालं स निनाय मनोरथैः॥३३॥**

**प्रसङ्गः**—पुत्रोत्पत्तिसमुत्कण्ठितो राजा दिलीपो बहुकालं यावत् सन्ततिरहित आसीदिति सूचयति महाकविः कालिदासोऽत्र।

**अन्वयः**—सः, आत्माऽनुरूपायांम्, तस्याम्, आत्मजन्मसमुत्सुकः, विलम्बितफलैः, मनोरथैः, कालम्, निनाया।

**सञ्जीविनी**—स राजा। आत्मानुरूपायां तस्याम्। आत्मनो जन्म यस्यासावात्मजन्मा पुत्रः, तस्मिन्समुत्सुकः, यद्वा आत्मनो जन्मनि पुत्ररूपेणोत्पत्तौ

समुत्सुकः सन् "आत्मा वै पुत्रनामासि" इति श्रुतेः, विलम्बितं फलं पुत्रप्राप्तिरूपम् येषां तैर्मनोरथैः कदा मे पुत्रो भवेदित्याशाभिः कालं निनाय यापयामास।

**वा०**–तेन आत्मजन्मसमुत्सुकेन कालो निन्ये।

**चन्द्रिका**–सः=दिलीपः, आत्माऽनुरूपायाम्=स्वयोग्यायाम्, तस्याम्=सुदक्षिणायाम्, आत्मजन्मसमुत्सुकः=पुत्रोत्पत्तिसमुत्कण्ठितः, विलम्बितफलैः=चिरीकृतपरिणामैः, मनोरथैः=आशाभिः, कालम्=समयम्, निनाय=याषयामास।

**समासः**–आत्मनः अनुरूपा आत्मानुरूपा, तस्याम आत्माऽनुरूपायाम्। आत्मनः जन्म यस्य सः आत्मजन्मा, यद्वा आत्मनः जन्म आत्मजन्म, आत्मजन्मनि समुत्सुकः आत्मजन्मसमुत्सुकः। विलम्बितफलं येषां ते विलम्बितफलाः तैः विलम्बितफलैः। मनसः रथाः मनोरथाः, तैः मनोरथैः।

**कोशः**–"जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः", "इष्टार्थोद्युक्त उत्सुकः" इति चामरः। "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति मेदिनी।

**शब्दार्थः**–सः=उस (राजा दिलीप) ने, आत्मानुरूपायाम्=अपने को सदृश, तस्याम्=उस (सुदक्षिणा) में, आत्मजन्मसमुत्सुकः=पुत्रजन्म के लिये उत्कण्ठित, विलम्बितफलैः=देर से फल मिलनेवाले, मनोरथैः=मनोरथों से, कालम्=समय, निनाय=बिताया।

**हिन्दी**–अपने अनुरूप रानी सुदक्षिणा में पुत्र जन्म के लिये उत्कण्ठित राजा दिलीप ने देर से फल मिलने वाले मनोरथों से समय बिताया अर्थात् चिरकाल तक उत्सुकता से पुत्रजन्म की प्रतीक्षा की।

**संतानार्थाय विधये स्वभुजादवतारिता।**
**तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे।।३४।।**

**प्रसङ्गः**–सन्तानार्थायानुष्ठानाय राजा दिलीपः सकलराज्यभारं सचिवेषु निचिक्षेपेति कथयति महाकविः कालिदासोऽत्र।

**अन्वयः**–तेन, सन्तानार्थाय, विधये, स्वभुजात्, अवतारिता, जगतः, गुर्वी, धूः, सचिवेषु, निचिक्षिपे।

**सञ्जीविनी**–तेन दिलीपेन। सन्तानोऽर्थः प्रयोजनं यस्य तस्मै सन्तानार्थाय विधयेऽनुष्ठानाय। स्वभुजादवतारितावरोपिता जगतो लोकस्य गुर्वी धूभीरः सचिवेषु निचिक्षिपे निहिता।

**वाच्य०**–स अवतारितां गुर्वी धुरम् सचिवेषु निचिक्षेप।

**चन्द्रिका**–तेन=दिलीपेन, सन्तानार्थाय=सन्ततिप्रयोजनाय, विधये=विधानाय, स्वभुजात्=निजबाहोः, अवतारिता=अवरोपिता, जगतः=संसारस्य, गुर्वी=दुर्भरा, धूः=भारः, सचिवेषु=मत्रिषु, निचिक्षिपे=निहिता।

**समासः**–सन्तानः अर्थः यस्य सः सन्तानार्थः, तस्मै सन्तानार्थाय। स्वस्थ भुजः स्वभुजः तस्मात् स्वभुजात्।

**कोशः**–"वंशोऽन्ववायः सन्तानः", "विधिर्विधाने दैवेऽपि", "स्वो ज्ञातावात्मनि स्वं त्रिप्वात्मीये स्वोऽस्त्रियां धने", "मन्त्री सहायः सचिवौ" इति चामरः। "अर्थो हेतौ प्रयोजने" इति हैमः। "गुरुस्तु गोष्पती श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः।

**शब्दार्थः**–तेन=उस (राजा दिलीप) से, सन्तानार्थाय=सन्तान के लिये, विधये=अनुष्ठान करने के निमित्त, स्वभुजात्=अपनी बाँह से, अवतारिता=उतारा गया, जगतः=संसार का, गुर्वी=गुरुतर, धूः=भार, सचिवेषु=मन्त्रियों पर, निचिक्षिपे=रखा गया।

**हिन्दी**–राजा दिलीप ने पुत्र के निमित्त अनुष्ठान करने के लिये संसार के गुरुतर भार को अपने ऊपर से उतार का मन्त्रियों के भुज पर रखा।

**अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया।**
**तौ दम्पती वसिष्ठस्य गुरोजग्मतुराश्रमम्।।३५।।**

**प्रसङ्गः**–पुत्रेच्छया राजा दिलीपः सुदक्षिणया सह विधातारं सम्पूज्य कुलगुरोः वशिष्ठस्याश्रमं गतवानिति निर्दिशति महाकविः कालिदासः।

**अन्वयः**–अथ, पुत्रकाम्यया, तौ दम्पती, प्रयतौ, "सन्तौ" विधातारम्, अभ्यर्च्य, गुरोः, वसिष्ठस्य, आश्रमम्, जग्मतुः।

**सञ्जीविनी**–अथ धुरोऽवतारानन्तरं पुत्रकाम्यात्मनः पुत्रेच्छया। "काम्यच्च" इति पुत्रशब्दात्काम्यच्प्रत्ययः। "अप्रत्ययात्" इति पुत्रकाम्य-धातोरकारप्रत्ययः। ततष्टाप् त्या। तौ दम्पता जायापती। राजदन्तादिषु जायाशब्दस्य दमिति निपातनात्साधुः। प्रयतौ पूतौ विधातारं ब्रह्माणमभ्यर्च्य। "स खलु पुत्रार्थिभिरुपास्यते" इति मान्त्रिकाः। गुरोः कुलगुरोर्वसिष्ठस्याश्रमं जग्मतुः। पुत्रप्राप्त्युपायापेक्षयेति शेषः।

**वाच्य०**–प्रयताभ्यां ताभ्यां वसिष्ठस्याश्रमः जग्मे।

**चन्द्रिका**–अथ=अनन्तरम्, पुत्रकाम्यया=सुतेच्छेया, तौ=सुदक्षिणदिलीपौ, दम्पती=जम्पती, प्रयतौ=पूतौ, विधातारम्=ब्रह्माणम्, अभ्यर्च्य=सम्पूज्य, गुरोः=कुलगुरोः, वसिष्ठस्य=वसिष्ठनाम्ना सुप्रसिद्धस्य महर्षेः, आश्रमम्=पर्णशालाम्, जग्मतुः=ययतुः।

**कोशः**–"मंगलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथे अथ", "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी", "दम्पती जम्पती जायापती भार्यापती च तौ" "पवित्रः प्रयतः पूतः", "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः" इति चामरः। "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः।

**शब्दार्थः**–अथ=इसके बाद, पुत्रकाम्यया=पुत्र की इच्छा से, तौ=वे दोनों (सुदक्षिणा और दिलीप), दम्पती=पतिपत्नी, प्रयतौ=पवित्र होकर, विधातारम्=ब्रह्मा की, अभ्यर्च्य=पूजा कर, गुरोः=कुलगुरु, वसिष्ठस्य=वसिष्ठ नाम से सुप्रसिद्ध महर्षि के, आश्रमम्=आश्रम को, जग्मतुः=गये।

**हिन्दी**–इसके बाद पुत्र की इच्छा से वे दोनों पतिपत्नी पवित्र होकर ब्रह्मा की पूजा करके कुलग़ुरु वसिष्ठ के आश्रम गये।

**स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ।**
**प्रावृषेण्यं पयोवाहं विद्युदैरावताविव।।३६।।**

**प्रंसङ्गः**–कुलगुरोः वशिष्ठस्याश्रमगमनकालीनस्य रथस्य वर्णनं करोत्यत्र महाकविः कालिदासः।

**अन्वयः**–स्निग्धगम्भीरनिर्घोषम्, एकम्, स्यदनम्, प्रावृषेण्यम्, पयोवाहम्, विद्युदैरावतौ, इव, आस्थितौ।

**सञ्जीविनी**–स्निग्धो मधुरो गम्भीरो निर्घोषो यस्य तमेकं स्यन्दनं रथम्। प्रावृषि भवः प्रावृषेण्यः। "प्रावृषं एण्यः" इत्येण्यप्रत्ययः। तं प्रावृषेण्यं पयोवाहं मेघं विद्युदैरावताविव। आस्थितावारूढौ। जग्मतुरिति पूर्वेण सम्बन्धः। इरा आपः। "इरा भूवाक्सुराप्सु स्यात्" इत्यमरः। इरावान्समुद्रः, तत्र भव ऐरावतोऽभ्रमातङ्गः। "ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः। "अभ्र-मातङ्गत्वाच्चाभ्रस्थरूपत्वात्" इति क्षीरस्वामी। अत एव मेघारोहणं विद्युत्साहचर्यं च घटते। चिञ्चविद्युत ऐरावतसाहचर्यादिवैरावती संज्ञा। ऐरावतस्य स्त्र्यैरावतीति क्षरीस्वामी। तस्मात्सुष्ठूक्तं विद्युदैरावताविततीति। एकरथारोहणोक्त्या कार्यसिद्धिबीजं दम्पत्योरत्यन्तसौमनस्यं सूचयति।

**वाच्य०**–विद्युदैरावताभ्यामिवास्थिताभ्याम् (ताभ्यां जग्मे)।

**चन्द्रिका**–स्निग्धगम्भीरनिर्घोषम्=मधुरगम्भीरध्वनिम्, एकम्=अभिन्नम्, स्यन्दनम्=रथम्, प्रावृषेण्यम्=वर्षर्तुभवम्, पयोवाहम्=मेघम्, विद्युदैरावतौ= तडिदभ्रमातङ्गौ, इव=यथा, आस्थितौ=आरूढौ, "जग्मतुः" इति पूर्वेणाऽन्वयः।

**समासः**–स्निग्धश्चासौ गम्भीरः स्निग्धगम्भीरः, स्निग्धगम्भीरः निर्घोषः यस्य सः स्निग्धगम्भीरनिर्घोषः, तम् स्निग्धगम्भीरनिर्घोषम्। विद्युच्च ऐरावतश्च विद्युदैगवतौ। प्रावृषि भवः प्रावृषेण्यः, तम् प्रावृषेण्यम्।

**कोश:**—"चिक्कणं मसृणं स्निग्धम्", "स्वाननिर्घोषनिर्ह्रादनादनिस्वान-निस्वानः", "एके मुख्यान्यकेवलाः", "याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः", "स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः" "सलिलं कमलं जलम्। पयः कीलालममृतं जीवनं भुवनं वनम्" "शम्पाशतह्रदाह्रादिन्यैवरावत्यः क्षणप्रभा। तडित्सौदामनी विद्युच्चञ्चला चपला अपि", "ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इति चामरः।

**शब्दार्थ:**—स्निग्धगम्भीरनिर्घोषम्=मधुर तथा गम्भीर ध्वनि वाले, एकम्=एक ही, स्यन्दनम्=रथ पर, प्रावृषेण्यम्=वर्षा ऋतु के, पयोवाहम्=बादल पर, विद्युदैरावतौ=बिजली और ऐरावत हाथी के, इव=समान, आस्थितौ=चढ़े हुए।

**हिन्दी**—वर्षा ऋतु के बादल पर चढ़े बिजली और ऐरावत हाथी के समान मधुर तथा गम्भीर ध्वनि वाले एक ही रथ पर बैठे हुए सुदक्षिणा और दिलीप गुरु के आश्रम गये।

**मा भूदाश्रमपीडेति परिमेयपुरःसरौ।**
**अनुभावविशेषात्तु सेनापरिवृताविव।।३७।।**

**प्रसङ्ग:**—राजा दिलीप आश्रमस्य शान्तिभङ्गभिया परिमितपरिचरैः सह गतवानिति सूचयति महाकविः कालिदासोऽत्र।

**अन्वंय:**—आश्रमपीडा, मा भूत्, इति, परिमेयपुरःसरौ, अनुभावविशेषात्, तु, सेनापरिवृतौ, इव।

**सञ्जीविनी**—पुनः किंभूतौ दम्पती? आश्रमपीडा मा भून्मास्त्विति हेतोः। "माङि लुङ" इत्याशीरर्थे लुङ्। "न माङ्योगे" इत्याडागमनिषेधः। परिमेयपुरःसरौ परिमितपरिचरौ। अनुभावविशेषात्तु तेजोविशेषात्सेनापरिवृताविव स्थितौ।

**वाच्य०**—आश्रमपीडया मा भावीति परिमेयपुरःसराभ्यां सेनापरिवृताभ्यामिव (ताभ्यां जग्मे)।

**चन्द्रिका**–आश्रमपीडा=आश्रमिणां क्लेशः, मा भूत्=माऽस्तु, इति=हेतोः, परिमेयपुरःसरौ=सीमिताग्रेसरौ, अनुभावविशेषात्=प्रभावाऽतिशयात्, तु=किन्तु, सेनापरिवृतौ=चमूवेष्टितौ, इव=यथा, स्थितौ जग्मतुः इति पूर्वेणान्वयः।

**समासः**–आश्रमस्य पीडा आश्रमपीडा। परिमेयाः पुरःसराः ययोः तौ परिमेयपुरःसरौ। अनुभावस्य विशेषः अनुभावविशेषः, तस्मात् अनुभावविशेषात्। सेनया परिवृतौ सेनापरिवृतौ।

**कोशः**–पुरोगाग्रेसरःप्रष्ठाग्रतःसरपुरःसराः", "अनुभावः प्रभावे च सतां मतिविनिश्चये", "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः। बरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्।।" इति चामरः।

**शब्दार्थः**–आश्रमपीडा=आश्रमवासियों के कार्य में बाधा, मा भूत्=नहीं हो, इति=इसलिए, परिमेयपूरःसरौ=थोड़े पुरःसरों (आगे चलने वाले नौकरों) के साथ, अनुभावविशेषात्=अत्यन्त प्रभाव के कारण, तु=परन्तु, सेनापरिवृतौ=सेनाओं से घिरे हुए की, इव=तरह।

**हिन्दी**–आश्रमवासियों के नियमित कार्य में बाधा न हो इसलिए थोड़े से नौकरों को लिये हुए, परन्तु अत्यन्त प्रभावशाली होने के कारण सेनाओं से घिरे हुए की तरह सुदक्षिणा दिलीप रथ में बैठकर गुरु वसिष्ठ के आश्रम गये।

**सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः।**
**पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः।।३८।।**

**प्रसङ्गः**–राज्ञो दिलीपस्याश्रमगमनकालीनस्य प्रवाहितवायोर्वर्णनं करोत्यत्र महाकविः कालिदासः।

**अन्वयः**–सुखस्पर्शैः, शालनियर्सागन्धिभिः, पुष्परेणूत्किरैः, आधूतवन-राजिभिः, वातैः, सेव्यमानौ।

**सञ्जीविनो**–पुनःकथंभूतौ? सुखशीतलत्वात्प्रियः स्पर्शो येषां तैः।

शालनिर्यासगन्धिभिः सर्जतरुनिस्यन्दगन्धवद्भिः "शालः सर्जतरुः स्मृतः" इति शाश्वतः। उत्किरन्ति विक्षिपन्तीत्युत्किरा "इगुपध०" इत्यादिना किरतेः कप्रत्ययः। पुष्परेणूनामुत्किरास्तैराधूता मान्द्यादीपत्कम्पिता वनराजयो यैस्तैर्वातैः सेव्यमानौ।

**वाच्य०**–सुखस्पर्शाच्छालनिर्यासगन्धिनः पुष्परेणूत्किरानाधूतवनराजान् वातात् सेवामानाभ्यां (ताभ्यां जग्मे)।

**चन्द्रिका**–सुखस्पर्शैः=प्रियस्पर्शैः, शालनिर्यासगन्धिभिः=सर्जतरुनिस्यन्द - सुरभिभिः, पुष्परेणूत्किरैः=कुसुमपरागविक्षेपकैः, आधूतवनराजिभिः= ईषत्कम्पितविपिनावलिभिः, वातैः=मन्दानिलैः, सेव्यमानौ=परिचर्यमाणौ "जग्मतुः"।

**समासः**–सुखः स्पर्शः येषां ते सुखस्पर्शाः, तैः सुखस्पर्शैः। शालानां निर्यासाः शालनिर्यासाः, शालनिर्यासानां गन्धः शालनिर्यासगन्धः, शालनिर्यासगन्धः अस्ति एषु इति शालनिर्यासगन्धिनः, तैः शालनिर्यासगन्धिभिः। पुष्पाणाम् रेणवः पुष्परेणवः, पुष्परेणूनाम् उत्किराः पुष्परेणूत्किराः, तैः पुष्परेणूत्किरैः। वनानां राजयः वनराजयः, आधूताः वनराजयो यैः ते आधूतवनराजयः, तैः आधूतवनराजिभिः।

**कोशः**–"अटव्यरण्यं विपिनं गहनं काननं वनम्", "वीथ्यालिरावलि पंक्तिः श्रेणी लेखास्तु राजयः" "नभस्वद्वातपवनपवमानप्रभञ्जनाः" इति चामरः। "शालः सर्जतरुः स्मृतः" इति शाश्वतः। "परागः कौसुमे रेणौ धूलिस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने" इति कोशान्तरम्।

**शब्दार्थः**–सुखस्पर्शैः=प्रियस्पर्श वाली, शालनिर्यासगन्धिभिः=शाल (एक प्रकार का वृक्ष) के निर्यात (गोंद) की सुगन्धि से युक्त, पुष्परेणूत्किरेः=परागों को बिखेरनेवाला, आधूतवनराजिभिः=वनमालाओं को धीरे-धीरे कँपाने वाली, वातैः=वायुओं से, सेव्यमानौ=सेवित।

**हिन्दी**–प्रिय स्पर्श वाले, शाल वृक्ष की गोंद की सुगन्धि से युक्त, परगों को बिखेरने वाले तथा वनमाला को धीरे-धीरे कँपाते हुए वायुओं से सेवित होते हुए सुदक्षिणा दिलीप वसिष्ठाश्रम गये।

**मनोभिरामः शृण्वन्तौ रथनेमिस्वनोन्मुखं।**
**षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः।।३९।।**

**प्रसङ्गः**–श्लोकेऽस्मिन् राज्ञो दिलीपस्य वशिष्ठाश्रमगमनसमये पथिस्थितानां मयूराणां ध्वनेर्वर्णनं करोति महाकविः कालिदासः।

**अन्वयः**–रथनेमिस्वनोन्मुखैः शिखण्डिभिः द्विधा भिन्नाः षड्जसंवादिनीः मनोभिरामाः केकाः शृण्वन्तौ।

**सञ्जीविनी**–रथनेमिस्वनोन्मुखैः। मेघध्वनिशङ्कयोन्नमितमुखैरित्यर्थः। शिखण्डिभिर्मयूरैर्द्विधा भिन्नाः। शुद्धविकृतभेदेनाविष्कृतावस्थायां च्युताच्युतभेदेन वा षड्जो द्विविधः तत्सादृश्यात्केका अपि द्विधा भिन्ना इत्युच्यते। अत एवाह-षड्जसंवादिनीरिति। षड्भ्यः स्थानेभ्यो जातः षड्जः। तदुक्तम्- "नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन्। षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः।।" स च तन्त्रीकण्ठजन्मा स्वरविशेषः। "निषादर्षभगान्धारषड्जम यमधैवताः। पञ्चमश्चेत्यमी सत तन्त्रीकण्ठोत्थिता स्वराः।।" इत्यमरः। षड्जेन संवादिनीः सदृशीः। तदुक्तं मातङ्गेन-"षड्जः मयूरो वदति" इति। मनोभिरामा मनसः प्रियाः। के मूर्ध्नि कायन्ति ध्वनन्तीति केका मयूरबाण्यः। "केका वाणी मयूरस्य" इत्यमरः। ताः केकाः शृण्वन्तौ। इति श्लोकार्थः।

**वाच्य०**–केकाः शृण्वद्भ्यां (ताभ्यां जग्मे)।

**चन्द्रिका**–रथनेमिस्वनोन्मुखैः=स्यन्दनचक्रप्रान्तशब्दोन्नताननैः, शिखण्डिभिः=मयूरैः, द्विधा=शुद्धधिकृतभेदेन, भिन्नाः=भेदमापन्नाः, षड्ज-संवादिनीः=षड्जाख्यस्वरानुकारिणीः, केकाः=मयूररवाः, शृण्वन्तौ आकर्णयन्तौ, "तौ जग्मतुः" इति पूर्वेणाऽन्वयः।

**समास:**–रथस्य नेमय: रथनेमय:, रथनेमीनां स्वन: रथनेमिस्वन:, उदयेषां ते उन्मुखा:, रथनेमिस्वनैन उन्मुखा: रथनेमिस्वनोन्मुखा:, तै: रथनेमिस्वनोन्मुखै:। षड्जेन संवादिन्य: षड्जसंवादिन्य:, ता: षड्जसंवादिनी:। मनस: अभिरामा: मनोभिरामा:, ता: मनोऽभिरामा:।

**कोश:**–"शब्दे निनादनिनदध्वनिध्वानरवस्वना:", "शिखण्डस्तु पिच्छबर्हे नपुंसके", निषादर्षभगान्धराषड्जमध्यमधैवता:", पञ्चमश्चेत्यमी सत तन्त्री–कण्ठोत्थिता: स्वरा:", "केका वाणी मयूरस्य" इति चामर:। "पुल्लिङ्गस्तिनिशे नेमिश्चक्रप्रान्ते स्त्रियामपि" इति रुद्र:।

**शब्दार्थ:**–रथनेमिस्वनोन्मुखै:=रथ के पहियों के शब्दों से ऊपर मुँह किये, शिखण्डिभि:=मयूरों के, द्विधा=शब्द और विकृत भेद से, भिन्ना:=अलग-अलग, षड्ज (सात स्वरों में एक) के समान, मनोऽभिरामा:=मनोहर, केका:=मयूरों के शब्दों को, श्रृण्वन्तौ=सुनते हुए।

**हिन्दी**–रथ के पहियों के शब्दों के कारण ऊपर मुँह किये मयूरों की शुद्ध और विकृत भेद से भिन्न षड्ज स्वर के समान, मनोहर केका (मयूरों के शब्दों) को सुनते हुए सुदक्षिणा दिलीप वसिष्ठाश्रम गये।

**परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु।**
**मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु।।४०।।**

**प्रसङ्ग:**–राज्ञो दिलीपस्य वशिष्ठाश्रमगमनसमये पथि विचरतां मृगाणां वर्णनं करोत्यत्र महाकवि: कालिदास:।

**अन्वय:**–अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगद्वन्द्वेषु परस्पराक्षि–सादृश्यम् पश्यन्तौ।

**सञ्जीविनी**–विश्रम्भाददूरं समीपं यथा भवति तथोज्झितं वर्त्म यैस्तेषु। स्यन्दनाबद्धदृष्टिषु स्यन्दने रथ आबद्धा सज्जिता दृष्टिनेत्रं यैस्तेषु। "दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि" इति हलायुध:। कौतुक–

वशाद्रथासक्तदृष्टिष्वित्यर्थः। मृग्यश्च मृगाश्च मृगाः "पुमान्स्त्रिया" इत्येकशेषः। तेषां द्वन्द्वेषु मिथुनेषु। "स्त्रीपुंसौ मिथुनं द्वन्द्वम्;, इत्यमरः। परस्पराक्ष्णां सादृश्यं पश्यन्तौ। द्वन्द्वशब्दसामर्थ्यान्मृगीषु सुदक्षिणाक्षिसादृश्यं दिलीपो दिलीपाक्षिसादृश्यं च मृगेषु सुदक्षिणेतयेवं विवेक्तव्यम्।

**वाच्य०**–परस्पराक्षिसादृश्यं पश्यद्भ्यां (ताभ्यां जग्मे)।

**चन्द्रिका**–अदूरोज्झितवर्त्मसु=समीपव्यक्तमार्गेषु, स्यन्दनाबद्धदृष्टिषु=रथासक्तनेत्रेषु मृगद्वन्द्वेषु=हरिणमिथुनेषु, परस्पराक्षिसादृश्यम्=मिथश्चक्षुःसारूप्यम्, पश्यन्तौ=अवलोकयन्तौ, जग्मतुः।

**समासः**–न दूरम् अदूरम्, अदूरम् उज्झितम्, अदूरोज्झितम्, अदूरोज्झितम् वर्त्म यैः तानि अदूरोज्झितवर्त्मानि, तेषु अदूरोज्झितवर्त्मसु। आसमन्तात् बद्धाः आबद्धाः, आबद्धाः दृष्टयः आबद्धदृष्टयः, स्यन्दने आबद्धदृष्टयः यैः तानि स्यन्दनाबद्धदृष्टीनि, तेषु स्यन्दनाबद्धदृष्टिषु। मृग्यश्च मृगाश्च मृगाः, मृगाणाम् द्वन्द्वानि मृगद्वन्द्वानि, तेषु मृगद्वन्द्वेषु। अक्ष्णां सदृश्यम्, अक्षिसादृश्यम्, परस्परस्य अक्षिसादृश्यम् परस्पराक्षिसादृश्यम्, तत्।

**कोशः**–"याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः", "मृगे कुरंगवातायुहरिणाजिनयोनयः", "स्त्रीपुंसौ मिथुनं द्वन्द्वम्" इति चामरः। "दृग्दृष्टिनेत्रलोचंनचक्षुर्नयनाम्बकेक्षणाक्षीणि" इति हलायुधः।

**शब्दार्थः**–अदूरोज्झितवर्त्मसु=रास्ता छोड़कर समीप ही खड़े हुए, स्यन्दनाबद्धदृष्टिषु=रथ की ओर अपलक नेत्रों से देख रहे, मृगद्वन्द्वेषु=मृगों के जोड़ों में, परस्पराक्षिसादृश्यम्=एक दूसरे की आँखों के सादृश्य को, पश्यन्तौ=देखते हुए।

**हिन्दी**–रास्ता छोड़कर पास ही खड़े, रथ की ओर अपलक नेत्रों से देख रहे, मृगों की जोड़ियों में परस्पर आँखों की समानता को देखते हुए सुदक्षिणा और दिलीप वसिष्ठ के आश्रम में गये।

**श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम्।**
**सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ।।४१।।**

**प्रसङ्गः**–राज्ञो दिलीपस्य वशिष्ठाश्रमगमनसमये नभसि विचरतां पंक्तिबद्धसारसानां वर्णनं करोत्यत्र महाकविः कालिदासः।

**अन्वयः**–श्रेणीबन्धात्, अस्तम्थाम्, तोरणस्रजम्, वितन्वद्भिः, कलनिर्ह्रादैः, सारसैः, क्वचित्, उन्नमितानौ।

**सञ्जीविनी**–श्रेणीबन्धात्पङ्क्तिबन्धनाद्वेतोरस्तम्भमाधारस्तुम्भरहिताम्। तोरणं बहिर्द्वारम्। "तोरणोऽस्त्री बहिर्द्वारम" इत्यमरः। तत्र या स्रग्विरच्यते तां तोरणस्रजं वितन्वद्भिः। कुर्वद्भिरिवेत्यर्थः। उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षेयम्। कलनिर्ह्रादैरत्यक्तमधुरध्वनिभिः सारसैः पक्षिविशेषैः कारणै। क्वचिदुन्नमिताननौ। "सारसो मैथुनो कामी गोनर्दः पुष्कराह्वयः", इति यादवः।

**वाच्य०**–उन्नमिताननाभ्यां (ताभ्यां जग्मे)।

**चन्द्रिका**–श्रेणीबन्धात्=पंक्तिगमनात्, अस्तम्भाम्=अनाधाराम्, तोरणस्रजम्= बहिर्द्वारमालाम्, वितन्वद्भिः=कुर्वद्भिः "इव" इति शेषः। कलनिर्ह्रादैः=मधुरास्फुटध्वनिभिः, सारसैः=पक्षिविशेषैः, क्वचित्=कुत्रचित्, उन्नमिताऽऽननौ=ऊर्ध्वीकृतमुखौ, जग्मतुः।

**समासः**–श्रेण्याः बन्धः श्रेणीबन्धः, तस्मात् श्रेणीबन्धात्। न स्तम्भः यस्याः सा अस्तम्भा, ताम् अस्तम्भाम्। तोरणस्य स्रक् तोरणस्रक्, ताम् तोरणस्र जम्। कलः निर्ह्रादः येषां ते कलनिर्ह्रादाः, तैः कलनिर्ह्रादैः। उन्नमितेआनने ययोः तौ उन्नमिताननौ।

**कोशः**–"विथ्यालिरावलिः पंक्तिः श्रेणीलेखास्तु राजयः", "तोरणोऽस्त्री बहिर्द्वारम्", "ध्वनौ तु मधुरास्फुटे। कलः", "स्वाननिर्घोषनिर्ह्रादनाद-निस्वाननिस्वनाः" "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इति चामरः। "सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इति यादवः।

**शब्दार्थ:**–श्रेणीबन्धात्=पंक्तिबद्ध होकर उड़ने से, अस्तम्भाम्=निराधार, तोरणस्रजम्=तोरण (सिंहद्वार) की माला को, वितन्वद्भि:=बनाते हुए, कलनिर्ह्रादि:=मधुर एवं अस्पष्ट शब्द करनेवाले, सारसै:=सारस पक्षियों के कारण, क्वचित्=कहीं-कहीं, उन्नमिताननौ=ऊपर मुँह उठाये।

**हिन्दी**–पंक्तिबद्ध होकर उड़ने से आधार रहित सिंहद्वार पर लटकते हुए माला की तरह शोभायमान, सुन्दर तथा अस्पष्ट शब्द करने वाले सारस पक्षियों के कारण कहीं-कहीं ऊपर मुँह उठाकर सुदक्षिणा और दिलीप वसिष्ठ के आश्रम जा रहे थे।

**पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिन:।**
**रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ।।४२।।**

**प्रसङ्ग:**–वशिष्ठाश्रमगमनकाले मनोरथसिद्धिसूचकस्य पवनस्य गन्तव्यदिगभिमुखत्वात् तुरगोत्कीर्णै: रजोभिस्तौ दम्पती स्पर्शरहितावास्तामिति निर्दिशति महाकवि: कालिदास:।

**अन्वय:**–प्रार्थनासिद्धिशंसिन: पवनस्य अनुकूलत्वात् तुरगोत्कीर्णै: रजोभि:, अस्पृष्टालकवेष्टनौ।

**सञ्जीविनी**–प्रार्थनासिद्धिशंसिनोऽनुकूलत्वादेव मनोरथसिद्धिसूचकस्य पवनस्यानुकूलत्वाद् गन्तव्यदिगभिमुखत्वात्। तुरगोत्कीर्णै रजोभिरस्पृष्टा अलका देव्या वेष्टनमुष्णीषं च राज्ञो ययोस्तौ तथोक्तौ। "शिरसा वेष्टनशोभिना सुत:" इति वक्ष्यति।

**वाच्य०**–अस्पृष्टालकवेष्टनाभ्यां (ताभ्यां जग्मे)।

**चन्द्रिका**–प्रार्थनासिद्धिशंसिन:=याचनासिद्धिसूचकस्य, पवनस्य=वायो:, अनुकूलत्वात्=सम्मुखत्वात्, शकुनशास्त्रे सम्मुखपवनस्य कार्यसिद्धि-सूचकत्वमभिहितम्। तुरगोत्कीर्णै:=अश्वोत्थितै:, रजोभि:=धूलिभि:, अस्पृष्टालकवेष्टनौ=असम्पृक्तकेशोष्णीषौ जग्मतु:।

**समास:**–प्रार्थनाया: सिद्धि: प्रार्थनासिद्धि:, प्रार्थनासिद्धे: शंसीप्रार्थना-सिद्धिशंसी, तस्य प्रार्थनासिद्धिशंसिन:। तुरगै: उत्कीर्णानि तुरगोत्कीर्णानि, तै: तुरगोत्कीर्णै:। न स्पृष्टानि अस्पृष्टानि, अवकाश्च वेष्टनञ्च अलकवेष्टनानि, अस्पृष्टानि अलकवेष्टनानि ययो: तौ अस्पृष्टालकवेष्टनौ।

**कोश:**–"याञ्चाऽभिशस्तिर्याचनाऽर्थना", "घोटके वीतितुरगतुरंगा-श्चतुरंगमा:", "रेणुर्द्वयो: स्त्रियां धूलि: पांशुर्ना न द्वयो रज:" इति चामर:।

**शब्दार्थ:**–प्रार्थनासिद्धिशंसिन:=प्रार्थनासिद्धि: (पुत्रप्राप्ति) का सूचक, पवनस्य= हवा के, अनुकूलत्वात्=अनुकूल होने से, तुरगोत्कीर्णै:= घोड़ों से उड़ायी गयी, रजोभि:=धूलों के द्वारा, अस्पृष्टालकवेष्टनौ= नहीं स्पर्श किये गये बालों तथा पगड़ी वाले।

**हिन्दी**–प्रार्थनासिद्धि अर्थात् पुत्रप्राप्ति की सूचना देनेवाली हवा के अनुकूल (संमुख) होने से, घोड़ों से उड़ायी गयी धूलों से नहीं स्पर्श किये गये बालों तथा पगड़ी से युक्त वे दोनों गुरु वसिष्ठ के आश्रम गये।

**सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।**
**आमोदमुपजिघ्रन्तौ स्वनि:श्वासानुकारिणम्।।४३।।**

**प्रसङ्ग:**–वशिष्ठाश्रमगमनसमये पथि सरसीस्थितकमलामोदस्य तुलना तयो: नि:श्वासेन सह भवतिस्म। एतेन तयोरुत्कृष्टस्त्रीपुंसजातीयत्वमुक्तमिति निर्दिशति महाकवि: कालिदास:।

**अन्वय:**–सरसीषु वीचिविक्षोभशीतलम् स्वनि:श्वासाऽनुकारिणम् अरविन्दानाम् आमोदम् उपजिघ्रन्तौ।

**सञ्जीविनी**–सरसीषु वीचिविक्षोभशीतलमूर्मिसंघट्टनेन शीतलं स्वनि:श्वास-मनुसर्लुशलमस्येति स्वनि:श्वासानुकारिणम्। एतेन तयोरुत्कृष्टस्त्रीपुंसजातीय-त्वमुक्तम्। अरविन्दानामामोदमुपजिघ्रान्तौ प्राणेन गृहन्तौ।

**वाच्य०**–आमोदमुपजिघ्रद्भ्यां ताभ्यां (जग्मे)।

**चन्द्रिका**–सरसीषु=कासारेषु, वीचिविक्षोभशीतलम्=ऊर्मिसंयोग शिशिरम्, स्वनिःश्वासाऽनुकारिणम्=निजनिःश्वासतुल्यम्, अरविन्दानाम्=कमलानाम्, आमोद=सौरभम्, उपजिघ्रन्तौ=घ्राणेन गृह्णन्तौ, जग्मतुः।

**समासः**–वीचौनां विक्षोभः वीचिविक्षोभः, वीचिविक्षोभेण शीतलः-विचिदिक्षोभशीतलः तं वीचिविक्षेभशीतलम्। स्वस्य निःश्वासः, स्वनिःश्वासः स्वनिःश्वासस्य अनुकारी स्वनिश्वासानुकारी, तम् स्वनिःश्वासाऽनुकारिणम्।

**कोशः**–"कासारः सरसी सरः", "भंगस्तरंग ऊर्म्मिर्वा स्त्रियां वीचिः", "सुषौमः शिशिरो जडः। तुषारः शीजलः शीतो हिमः सप्तान्यलिंगकाः" "स्वोवातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने", "आमोदः सोऽतिनिर्हारी", इति चामरः।

**शब्दार्थः**–सरसीषु=सरोवरों में, वीचिविक्षोभशीतलम्=लहरों के संघर्ष से शीतल, स्वनिःश्वासानुकारिणम्=अपनी (सुदक्षिणा और दिलीप की) साँसों के समान, अरविन्दानाम्=कमलों की, आमोदम्=सुगन्धि को, उपजिघ्रन्तौ=सूँघते हुए।

**हिन्दी**–सरोवारों में लहरों के संघर्ष से शीतल, अपनी सांसों के समान कमलों की सुगन्धि को सूँघते हुए वे दोनों (सुदक्षिणा और दिलीप) गुरु वसिष्ठ के आश्रम गए।

**ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम्।**
**अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः।।४४।।**

**प्रसङ्गः**–वशिष्ठाश्रमगमनसमये पथि स्वदत्तेषु यूपचिह्नेषु ग्रामेषु जज्वनाममोघाः आशीर्वादानर्घ्यस्वीकारोत्तरं तौ प्रतिगृह्णतः स्मेति निर्दिशति महाकविः कालिदासः–

**अन्वयः**–आत्मविसृष्टेषु, यूपचिह्नेषु, ग्रामेषु, अमोघाः, यज्वनाम्, आशीषः अर्घ्यानुपदम्, प्रतिगृह्णन्तौ।

**सञ्जीविनी**–आत्मविसृष्टेषु स्वदत्तेषु। यूपो नाम संस्कृतः पशुबन्धाय

दारुविशेषः। यूपा एव चिह्नानि येषां तेषु ग्रामेष्वमोघाः सफला यज्वानां विधिनेष्टवताम्। "यज्वा तु विधिनेष्टवान्, इत्यमरः। "सुयजोङ्वँनिप्" इति ङ्वनिप्प्रत्ययः आशिषः आशीर्वादान्। अर्धः पूजाविधिः। तदर्थं द्रव्यमर्घ्यम्। "पादार्घाभ्यां च" इति यत्प्रत्ययः। "षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि" इत्यमरः। अर्घ्यस्यानुपदमन्वक्। अर्घ्यस्वीकारानन्तरमित्यर्थः। प्रति-गृह्णन्तौ स्वीकुर्वन्तौ। पदस्य पश्चादानुपदम्। पश्चादर्थेऽव्ययीभावः। "अन्वगन्वक्ष-मनुपदं क्लीबमव्ययम्" इत्यमरः।

**वाच्य०**–आत्मविसृष्टेषु, यूपचिह्नेषु ग्रामेषु, यज्वनाममोघाः, आशिषः, अर्घ्यानुपदं प्रतिगृह्णद्भ्यां, "ताभ्यां जग्मे"।

**चन्द्रिका**–आत्मविसृष्टेषु=स्वदत्तेषु, यूपचिह्नेषु, "यूपा" ख्यदारुविशेष-लक्षणेषु, ग्रामेषु=संवसथेषु, अमोघाः=अव्यर्थाः, यज्वनाम्=विधिनेष्टवताम्, आशिषः आशीर्वादान्, अर्घ्याऽनुपदम्=अर्घ्यस्वीकारोत्तरम्, प्रति गृह्णन्तौ= स्वीकुर्वन्तौ "जग्मतुः"।

**समासः**–आत्मना विसृष्टाः आत्मविसृष्टाः, तेषु आत्मविसृष्टेषु। यूपाः चिह्नानि येषां ते यूपचिह्नाः, तेषु यूपचिह्नेषु। न मोघाः अमोघाः, ताः। पदस्य पश्चात् अनुपदम्, अर्घ्यस्य अनुपदम् अर्घ्याऽनुपदम्।

**कोशः**–"स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने", "कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्", "समी संवसथग्रामी, "यज्वा तु विधिनेष्टवान् "मोघं निरर्थकम्", "षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि", "अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्", इति चामरः।

**शब्दार्थः**–आत्मविसृष्टेषु=अपने द्वारा दान में दिये गये, यूपचिह्नेषु=यूपनामक काष्ठविशेष से चिह्नित, ग्रामेषु=गाँवों में, अमोघा=अव्यर्थ, यज्वनाम्=विधिपूर्वक यज्ञ किए लोगों के, आशिषः=आशीर्वादों को, अर्घ्याऽनुपदम्=अर्घ्य के पश्चात्, प्रतिगृह्णन्तौ=ग्रहण करते हुए।

**हिन्दी**–अपने द्वारा दान में दिये गये, यज्ञांगभूत यूप नामक काष्ठ

विशेष से चिह्नित, गाँवों में,अर्घ्य के पश्चात् श्रोताओं के सफल आशीर्वादों को ग्रहण करते हुए सुदक्षिणा और दिलीप गुरु वसिष्ठ के आश्रम गये।

**हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्।**
**नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम्।।४५।।**

**प्रसङ्गः**—वशिष्ठाश्रमगमनसमये पथि हैयङ्गवीनमादायोपस्थिताना-भीरपल्लीवृद्धान् वन्यानां मार्गस्थिततरूणां नामतौ पृच्छतः स्मेति कथयति महाकविः कालिदासः—

**अन्वयः**—हैयङ्गवीनम् आदाय, उपस्थितान्, घोषवृद्धान्, वन्यानाम्, मार्गशाखिनाम्, नामधेयानि, पृच्छन्तौ।

**सञ्जीविनी**—ह्यस्तनगोदोहोद्भवं घृतं हैयंगवौनम्। ह्यः पूर्वेद्युर्भवम्। तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम्" इत्यमरः। "हैयंगवीनं संज्ञायाम्" ति निपातः। तत्सद्योघृतमादायोपस्थितान्घोषवृद्धान्। "घोष आभीरपल्ली यात्" इत्यमरः। वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ। "दुह्याच्–"त्यादिना पृच्छतेर्द्विकर्मकत्वम्। कुलकम्।

**वाच्य०**—हैयंगवीनमादाय, उपस्थितान् घोषवृद्धान्, वन्यानाम्, मार्गशाखिनां नामधेयानि पृच्छदृभ्यां "ताभ्यां जघ्मे"।

**चन्द्रिका**—हैयङ्गवीनम्=ह्यो गोदोहोद्भवं घृतम, तात्कालिकमिति यावत्। आदाय=गृहीत्वा, उपस्थितान्=आगतान्, घोषवृद्धान्=आभीरपल्लीस्थविरान्" वन्यानाम्=अरण्योद्भवानाम्, मार्गशाखिनाम्=वर्त्मतरूणाम्, नामधेयानि= अभिधानानि, पृच्छन्तौ=जिज्ञासमानौ।

**समासः**—घोषेषु वृद्धाः घोषवृद्धाः, तान् घो ..न्। मार्गे शाखिन मार्गशाखिनः, तेषां मार्गशाखिनाम्।

**कोशः**—"तत्तु हैयङ्गवीनं स्यात् ह्यो गोदोहोद्भवं घृतम्, "घोष आभीर पल्ली स्यात्", "अटव्यरण्यं विपिनं गहनं काननं वनम्", "अयनं वर्त्म

मार्गाध्वपन्थान: पदवी सूति:", वृक्षो महीरुह: शाखी विटपी पादपस्तरु:" "आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च" इति चामर:।

**शब्दार्थ:**—हैयङ्गवीनम=गाय का ताजा घी, आदाय=लेकर, उपस्थितान्=आये हुए, घोषवृद्धान्=बूढ़े अहीरों को, वन्यानाम्=जङ्गली, मार्गशाखिनाम्=रास्ते के वृक्षों के, नामधेयानि=नाम्, पृच्छन्तौ=पूछते हुए।

**हिन्दी**—गाय का ताजा घी लेकर आये हुए बूढ़े अहीरों से (को) रास्ते में पड़ने वाले वृक्षों के नाम पूछते हुए।

**काप्यभिख्या तयोरासीद् व्रजतो: शुद्धवेषयो:।**
**हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव।।४६।।**

**प्रसङ्ग:**—श्लोकेऽस्मिन् महाकवि: कालिदास: वशिष्ठाश्रमं गच्छन्तौ शुद्धवेषधारिणोस्तयोस्तुलनां हिमनिर्मुक्तभ्यां चित्राचन्द्राभ्यां सह करोति—

**अन्वय:**—व्रजतो:, शुद्धवेषयो: तयो:, हिमनिर्मूक्तयो:, चित्राचन्द्रमसो:, इव योगे, कापि, अभिख्या, आसीत्।

**सञ्जीविनी**—व्रजतोर्गच्छतो: शुद्धवेषयोरुज्ज्वलनेपथ्ययोस्तयो: सुदक्षिणा: दिलीपयो:। हिमनिर्मुक्तयोश्चित्राचन्द्रमसोरिव। योगे सति काप्यनिर्वाच्याभिख्या शोभाऽऽसीत्। "अभिख्या नामशोभयो:" इत्यमर:। "आतश्चोपसर्गे" इत्यङ्प्रत्यय:। चित्रानक्षत्रविशेष:। शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरिवेत्यर्थ:।

**वाच्य०**—व्रजतो: शुद्धवेषयोस्तयो, हिमनिर्मूक्तयो:, चित्राचन्द्रमसोरिव, योगे "सति" कयाऽपि, अभिख्यया अभूयत।

**चन्द्रिका**—व्रजतो:—गच्छतो: शुद्धवेषयो:=उज्ज्वलनेपथ्ययो:, तयो:= सुदक्षिणादिलीपयो:, हिमनिर्मुक्तयो:=तुषाराऽग्रस्तयो:, चित्राचन्द्रमसो:= चित्राख्यनक्षत्रविशेषचन्द्रयो:, इव=यथा, योगे=संयोगे, काऽपि=अनिर्वचनीया, अभिख्या=शोभा, आसीत्=अभूत्।

**समास:**–शुद्ध: वेष: ययो: तौ शुद्धवेषौ, तयो: शुद्धवेषयी:। हिमात् निर्मुक्तौ हिमनिर्मुक्तौ, तयो: हिमनिर्मुक्तयो:। चित्रा च चन्द्रमाश्च चित्राचन्द्रमसौ, तयो: चित्राचन्द्रमसौ:।

**कोश:**–"आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्", "अवश्यायस्तु नीहारस्तुषारतुहिनं हिमम्। प्रालेयं मिहिका", "अभिख्या नामशोभयो:", इति चामर:। "योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु" इति मेदिनी।

**शब्दार्थ:**–ब्रजतो:=जाते हुए शुद्धवेषयो:=शुद्ध वेष धारण किये, तयो:=उन दोनों (सुदक्षिणा और दिलीप) की, हिमनिर्मुक्तयो:=तुषार से मुक्त, चित्राचन्द्रमसो:=चित्रानक्षत्र और चन्द्रमा के, इव=समान, योगे=संयोगे, सति=होने पर, कापि=लोकोत्तर, विलक्षण, अभिख्या=शोभा, आसीत्=थी।

**हिन्दी**–शुद्ध वेष धारण कर जाते हए सुदक्षिणा तथा दिलीप की, जाड़ा बीत जाने पर चित्रा नक्षत्र तथा चन्द्रमा के जैसा संयोगे होने पर असाधारण शोभा थी।

**तत्तद्भूमिपति: पत्न्यै दर्शयन्प्रियदर्शन:।**
**अपि लङ्घितमध्वानं बुबुधे न बुधोपम:।।४७।।**

**प्रसङ्ग:**–राज्ञो दिलीपस्य बुधग्रहेन सह तुलनां कुर्वन् सुदक्षिणां प्रति दर्शनीयवस्तुप्रदर्शनस्य वर्णनं करोत्यत्र महाकवि: कालिदास:–

**अन्वय:**–प्रियदर्शन:, बुधोपम:, भूमिपति:, पत्न्यै, तत्तत् दर्शयन्, लंघितम्, अपि, अध्वानन्, न, बुबधे।

**सञ्जीविनी**–प्रियं दर्शनं स्वकर्मकं यस्यासौ प्रियदर्शन:। योग्यदर्शनीय इत्यर्थ:। भूमिपति: पत्न्ये तत्तद्भुतं वस्तु दर्शयंल्लङ्घितमतिवाहितमप्यध्वानं न बुबुधे न ज्ञातवान्। बुध: सौम्य उपमोपमानं यस्येति विग्रह:। इदं विशेषणं तत्तद्दर्शयन्नित्युपयोगितयैवास्य ज्ञातृत्वसूचनार्थम्।

**वाच्य०**–प्रियदर्शनेन बुधोपमेन भूमिपतिना तत्तत् पत्न्यै दर्शयता लङ्घितोऽपि अध्वा न बुबधे।

**चन्द्रिका**–प्रियदर्शनः=अवलोकनीयः, बुधोपमः=बुधग्रहसदृशः भूमिपतिः=क्षितीशः, तत्तत्=दर्शनीयम्, पत्न्यै=भार्यायैं, दर्शयन्=चाक्षुषं कारयन्, लंघितम्=व्यतीतम्, अपि, अध्वानम्=मार्गम्, न=नहि, बुबुधे=जानातिस्म।

**समासः**–प्रियं दर्शनं यस्य सः प्रियदर्शनः। बुधः उपमा यस्य सः बुधोपमः। भूमेः पतिः भूमिपतिः।

**कोशः**–"बुधवृद्धौ पण्डितेऽपि", "उपमोपमानं स्यात्" इति चामरः।

**शब्दार्थः**–प्रियदर्शनः=दर्शनीय, बुधोपमः=बुधग्रह के सदृश, भूमिपतिः=क्षितीशः (राजा दिलीप), तत्तत्=दर्शनीय वस्तु, पत्न्यै=स्त्री को, दर्शयन्=दिखाते हुए, लंघितम्=बीते हुए, अध्वानम्=मार्ग को, अपि=भी, न=नहीं, बुबुधे=जाना।

**हिन्दी**–दर्शनीय तथा बुध ग्रह के सदृश राजा दिलीप वे सभी दर्शनीय वस्तुएं पत्नी को दिखाते हुए बीते रास्ते को भी न जान सकें।

**स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः।**
**सायं संयमिनस्तस्य महर्षेर्महिषीसखः।।४८।।**

**प्रसङ्गः**–राजा दिलीपः सुदक्षिणया सह गुरोः वशिष्ठस्याश्रमं प्रापेति सूचयति महाकविः कालिदासः–

**अन्वयः**–दुष्प्रापयशाः, श्रान्तवाहनः, महिषीसखः, सः सायम्, संयमिनः, तस्य, महर्षेः आश्रमम्, प्रापत्।

**सञ्जीविनी**–दुष्प्रापयशाः। दुष्प्रापमन्यदुर्लभं यशो यस्य स तथोक्तः। श्रान्तवाहनो दूरोपगमनात्क्तान्तयुन्यः। महिष्याः सखा महिषीसखः। राजाहःसखीभ्यष्टच्" इति टच्प्रत्ययः। सहायान्तरनिरपेक्ष इति भावः। स राजा। सायं सायंकाले संयमिनो नियमवतस्तस्य महर्षेवसिष्ठस्याश्रमं प्रापत्प्राप। पृष्पादित्वादङ्।

**वाच्य०**–दुष्प्रापयशसा श्रान्तवाहनेन महिषीसखेन तेन सायं संयमिनस्तस्य महर्षेः आश्रमः प्रापि।

**चन्द्रिका**–दुष्प्रापयशाः=दुर्लभकीर्तिः, श्रान्तवाहनः=क्लान्तवाहः, महिषी-सखः=सुदक्षिणासुहृत्, सः=दिलीपः, सायम्=सन्ध्याकाले, संयमिनः=व्रतिनः, तस्य=वसिष्ठस्य, महर्षेः=महामुनेः, आश्रमम्=स्थानम्, प्रापत्=अगच्छत्।

**समासः**–दुष्प्रापं यशः यस्य सः दुष्प्रापयशाः। श्रान्तानि वाहनानि यस्य सः श्रान्तवाहनः। महिष्याः सखा महिषीसखः। महान् च असौ ऋषिः महर्षिः, तस्य महर्षेः।

**कोशः**–सर्वं स्यात् वाहनं यानं युग्यं पत्रं च", "कृताभिषेका महिषी", "अथ मित्रं सखा सुहृत्", "शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः", "ऋषयः सत्यवचपः" इति चामरः।

**शब्दार्थः**–दुष्प्रापयशाः=(दूसरों को) दुर्लभ यश वाले, श्रान्तवाहनः=थके हुए घोड़ें वाले, ससिषीसखः=सुदक्षिणा के मित्र, सः=उस (राजा दिलीप) ने, सायम्=सन्ध्याकाल, संयमिनः=संयमी, तस्य=उस, महर्षेः=महर्षि (वसिष्ठ) के, आश्रमम्=आश्रम को, प्रापत्=प्राप्त किया।

**हिन्दीः**–अन्य मनुष्य से अप्राप्य कीर्ति से युक्त, जिसके घोड़े थके हैं, ऐसा राजा दिलीप पत्नी के साथ सायंकाल संयम से रहने वाले उस महामुनि वसिष्ठ जी के आश्रम पहुँच गया।

**वनान्तरादुपावृत्तैः समित्कुशफलाहरैः।**

**पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः।।४९।।**

**प्रसङ्गः**–सम्प्रति महाकविः कालिदासः तपस्विभिः पूर्यमाणं वशिष्ठाश्रमस्य वर्णनं करोति।

**अन्वयः**–वनान्तरात्, उपावृत्तैः, समित्कुशफलाहरैः, अदृश्याग्निप्रत्युद्यातैः, तपस्विभिः, पूर्यमाणम् "आश्रमं प्रापत्"।

**सञ्जीविनी**–वनान्तरादन्यस्माद्वनादुपावृत्तैः प्रत्यावृत्तैः। समिधश्च कुशांश्च फलानि चाहर्तुशीलं येषामिति समित्कुशफलाहरास्तैः। "अङ्गिताच्छील्ये" इति हरतेराङ्पूर्वादच्प्रत्ययः। अदृश्यैर्दर्शनायोग्यैरग्निभिर्वैतानिकैः प्रत्युद्याताः प्रत्युद्गताः, तैस्तपस्विभिः पूर्यमाणम्। "प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति" इति श्रुतेः। यथाह–काम पितर प्रोषितवन्त पुत्राः प्रत्याधावन्ति। एवमेतमग्नयः प्रतयाधावन्ति सशकलान्दारूनिवाहरन्" इति।

**वाच्य०**–वनान्तरात्, उपावृत्तैः, समित्कुशफलाहरैः, अदृश्याग्निप्रत्युद्यातैः, तपस्विभिः, पूर्यमाणम् "आश्रमं प्रापत्"।

**चन्द्रिका**–वनान्तरात्=अन्यविपिनात्, उपावृत्तैः=प्रत्यागतैः, समिकुश-फलाहरैः=काष्ठदर्भफलवाहकैः, अदृश्याग्निप्रत्युद्यातैः= अलक्ष्यदहन-प्रत्युद्गतैः, तपस्विभिः=तापसैः, पूर्यमाणम्=व्याप्यमानम्, "आश्रमं प्रापत्" इति पूर्वेण सम्बन्धः।

**समासः**–समिधश्च कुशाश्च फलानि च समित्कृशफलानि, समित्कुश-फलान्याहर्तुं शीलं येषां ते समित्कुशफलाहराः, तैः समित्कुशफलाहरैः। न दृश्याः अदृश्याः, अदृश्याश्च ते अग्नयः अदृश्याग्नयः, अदृश्याग्निभिः प्रत्युद्याताः अदृश्याग्निप्रत्युद्धाताः, तैः अदृश्याग्निप्रत्युद्यातैः।

**कोशः**–"काष्ठं दार्विन्धनन्त्वेध इध्ममेघः समित् स्त्रियाम्", तपस्वी तापसः पारिकांक्षी", "अस्त्री कुशं कुथो दर्भः पवित्रम्" इति चामरः।

**शब्दार्थः**–वनान्तरात्=दूसरे वन से, उपावृत्तैः=लौटे हुए, समित्कुश-फलाहरैः=समिध, कुश और फल लाने वाले, आदृश्याग्रिप्रत्युद्यातैः=गुप्त अग्नियों से स्वागत किये गये, तपस्विभिः=तपस्वियों के द्वारा, पूर्यमाणम्=भरे जाने वाले।

**हिन्दी**–दूसरे वनों से समिधा, कुश और फलों को लेकर लौटे हुए, छिपी हुई अग्नि से स्वागत किये गये, तपस्वियों से भरे जाने वाले (आश्रम को प्राप्त किया)।

**आकार्णमृषिपत्नीनामुटजद्वाररोधिभिः।**
**अपत्यैरिव नीवारभागधेयोचितैर्मृगैः।।५०।।**

**प्रसङ्गः**–श्लोकेऽस्मिन् महाकविः कालिदासः वशिष्ठाश्रमस्य मृगाणां वर्णनं करोति।

**अन्वयः**–नीवारभागधेयोचितैरुटजद्वाररोधिभिः मृगैः, ऋषिपत्नीनाम्, अपत्यैः, इव, आकीर्णम्।

**सञ्जीविनी**–नीवाराणां भाग एव भागधेयोंऽशः। "भागरूपनामभ्यो धेयः इति वक्तव्यसूत्रात्स्वार्भिधेये धेयप्रत्ययः तस्योचितैः। अत एवोटजानां पर्णशालानां द्वाररोधिभिर्द्वाररोधकैमृगैः ऋषिपत्नीनामपत्यैरिव आकीर्ण व्याप्तम्।

**वाच्य०**–नीवारभागधोयोचितैरुटजद्वाररोधिभिः मृगैः ऋषिपत्नीनाम्-अपत्यैरिवाकीर्ण आश्रमः प्रापि।

**चन्द्रिका**– नीवारभागधेयोचितैः=तृणधान्यांशयोग्यैः, उटजद्वाररोधिभिः= पर्णशालाप्रतीहारवरोधाकै, मृगै=हरिणैः, ऋषिपत्नीनाम्=मुनिभार्याणाम्, अपत्यैः=सन्तानैः, इव=यथा, आकीर्णम्=आक्रान्तम, "आश्रमं प्रापत्" इति पूर्वेण सम्बन्धः।

**समासः**–नीवाराणां भागधेयः=नौवारभागधेयः, नीवारभागधेयस्य उचिताः नीवारभागधेयोचिताः तैः नीवारभागधेयोचितैः। उटजानां द्वाराणि उटजद्वाराणि, उटजद्वाराणां, रोधिनः उटजद्वाररोधिनः, तैः उटजद्वाररोधिभिः। ऋषीणाम् पत्न्याः ऋषीपत्न्यः, तासाम् ऋषिपत्नीनाम्।

**कोशः**–"तृणधान्यानि नीवाराः",अंशभागौ तु वण्टके", मुनिनां तु पर्णशालोटजोऽस्त्रियाम्", "स्त्री द्वार्द्वारं प्रतीहारः", "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी। आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः स्मे" इति चामरः। "उचितं प्रोक्तमभ्यस्ते मिते ज्ञाते समञ्जसे",इति विश्वप्रकाशः।

**शब्दार्थः**–नीवारभागधेयोचितैः=तृणधान्यांश के अधिकारी, उटजद्वार-रोधिभिः=पर्णशला के दरवाजों को रोकने वाले, मृगैः=हरिणों से , ऋषिपत्नीनाम्

=ऋषिपत्नियों की, अपत्यैः=सन्तानों के, इव=समान, आकीर्णम्=व्याप्त।

**हिन्दी**–ऋषिपत्नियों के बच्चों की तरह तृणधान्यांश के अधिकारी पर्णशाला के दरवाजे को घेरने वाले हरिणों से व्याप्त आश्रम को प्राप्त किया।

**सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्।**
**विश्वासाय विहङ्गानामालवालाम्बुपायिताम्।।५१।।**

**प्रसङ्ग**–श्लोकेऽस्मिन् महाकविः कालिदासो वशिष्ठाश्रमस्य सेकान्त मुनिकन्याभिरालवालजलग्राहिणां पक्षिणां विश्वासाय तत्क्षर्णोज्झितवृक्षणां वर्णन करोति–

**अन्वयः**–सेकान्ते, मुनिकन्याभिः, आलवालाम्बुपायिनाम्, विहङ्गनाम् विश्वासाय, तत्क्षणोज्झितवृक्षकम्।

**सञ्जीविनी**–सेकान्ते वृक्षमूलसेचनावसाने। मुनिकन्याभिः सेक्त्रीभिः। आलवालेषु जलावाप्रदेशेषु यदम्बु तत्पायिनाम्। "स्यादालवालमावालमावापः" इत्यमरः। विहङ्गानां पक्षिणां विश्वासाय विश्रम्भाय "समौ विश्रम्भविश्वासौ" इत्यमरः, तत्क्षणे सेकक्षणे उज्झिता वृक्षका ह्रस्ववृक्षा यस्मिंस्तम्। ह्रस्वार्थे कप्रत्ययः।

**वाच्य०**–आलवालाम्बुपायिनाम्, विहङ्गनाम्, विश्वासाय, मुनिकन्याभिः, सेकान्ते, तत्क्षणोज्झितवृक्षकः आश्रमः प्रापि।

**चन्द्रिका**–सेकान्ते=आलवालाम्बुदानाऽवसाने, मुनिकन्याभिः= ऋषि-सुताभिः, आलवालाम्बुपायिनाम्=आलवालजलग्राहिणाम्, विहङ्गनाम्=पक्षिणाम्, विश्वासाय=प्रत्ययाय, तत्क्षणोज्झितवृक्षकम्=सद्यस्यक्तह्रस्वपादपम्, आश्रमं प्रापत्।

**समासः**–सेकस्य अन्तः सेकान्तः, तस्मिन् सेकान्ते। मुनीनां कन्याः मुनिकन्याः, ताभिः मुनिकन्याभिः।आलवालेषु अम्बु आलवालांम्बु, आलवालाम्बु

पिबन्तीति आलबालाम्बुपायिनः, तेषाम् आलवालाम्बुपायिनाम्। स चासौ क्षणश्च तत्क्षणः तत्क्षणे उज्झिताः तत्क्षणोज्झिताः, तत्क्षणोज्झिताः वृक्षकाः यस्मिन् सः तत्क्षणोज्झितवृक्षकः, तम् तत्क्षणोज्झितवृक्षकम्।

**कोशः**—"स्यादालवालमाबापः", "अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्", खगे विहङ्गविहगविहङ्गमविहायसः। शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजा", समौ विश्रम्भविश्वासौ", "वृक्षे महीरुहः शाखी विटपी पादपस्तरुः" इति चामरः। "अन्तं स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु" इति मेदिनी।

**शब्दार्थः**—सेकान्ते=पानी सींचने के बाद, मुनिकन्याभिः=मुनिकन्याओं से, आलावालाम्बुपायिनाम्=क्यारी के जल पीने वाले, विहङ्गनाम्=पक्षियों के, विश्वासाय=विश्वास के लिए, तत्क्षंणोज्झितवृक्षकम्=उसी क्षण छोड़े हुए छोटे-छोटे वृक्षों वाले।

**हिन्दी**—सींचने के बाद, मुनिकन्याओं से क्यारी के जल पीने वाले पक्षियों के विश्वास के लिए, उसी क्षण छोड़े हुए छोटे-छोटे वृक्षें वाले आश्रम को प्राप्त किये।

**आतपात्ययसंक्षिप्तनीवारासु निषादिभिः।**
**मृगैर्वर्तितरोमंन्थमुटजाङ्गनभूमिषु।।५२।।**

**प्रसङ्गः**—अत्र महाकविः कालिदासः वशिष्ठाश्रमस्य पर्णशालाङ्गनभूमिषु उपविषनां कृतरोमन्थानां मृगाणां वर्णनं करोति-

**अन्वयः**—आतपात्ययसंक्षिप्तनीवारासु, उटजाङ्गनभूमिषु, निषदिभिः, मृगैः, वर्तितरोमन्थम्।

**सञ्जीविनी**—आतपस्यात्ययेऽपगमे सति संक्षिप्ता राशीकृता नीवारास्तृण-धान्यानि यासु तासु। "नीवारास्तृणधान्यानि, इत्यमरः। उटजानां पर्णशालानामङ्गन-भूमिषु चत्वरभागेषु। "पर्णशालोटजोऽस्त्रियाम्" इति। "अङ्गनं चत्व राजिरे इति चामरः। निषादिभिरुपविष्टैमृगैर्वर्तितो निष्पादितो रोमन्थश्चर्वितचर्वणं यस्मिन्नाश्रमे तम्।

**वाच्य०**–वर्तितरोमन्थः आश्रमः प्रापि।

**चन्द्रिका**–आतपात्ययसंक्षिप्तनीवारासु=प्रकाशाऽपगमराशीकृततृण वान्यासु उटजाङ्गनभूमिषु=पर्णशालाऽजिरभूभागेषु, निषादिभिः=उपविष्टैः, मृगैः=हरिणैः वर्तितरोमन्थम्=कृतचर्वितचर्वणम् आश्रमम् प्रापत्।

**समासः**–आतपस्य अत्ययः आतपात्ययः, आतपात्यये संक्षिप्ताः आतपात्ययसंक्षिप्ताः, आतपात्ययसंक्षिप्ताः नीवाराः यासु ताः आतपात्ययसंक्षिप्त नीवाराः, तासु आतपात्ययसंक्षिप्तनीवारासु, उटजानाम् अङ्गनम् उटजाङ्गनम्, उटजाङ्गनस्य भूमयः उटजाङ्गनभूमयः, तासु उटजाङ्गनभूमिषु। वर्तितः रोमन्थः यस्मिन् सः वर्तितरोमन्थ, तम् वर्तितरोमन्थम्।

**कोशः**–"प्रकाशो द्योत आतपः", "स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः", "नीवारास्तृणधान्यानि", "पर्णशालोटजोऽस्त्रीयाम्", "अङ्गनं चत्वराजिरे" इति चामरः।

**शब्दार्थः**–आतपात्ययसंक्षिप्तनीवारासु=धूप के हट जाने पर इकट्ठे किये गये तृणधान्यों वाली, उटजाङ्गनभूमिषु=पर्णशाला के आङ्गन की जमीनों पर, निषादिभिः=बैठे हुए, मृगैः=हरिणों के द्वारा, वर्तितरोमन्थम्=पागुर (जुगाली) किये जा रहे।

**हिन्दी**–धूप के चले जाने से इकट्ठे किये गये तृणधान्यों वाली, पर्णशाला के आँगन की जमीनों पर बैठे हरिणों से जुगाली किये जा रहे आश्रम को प्राप्त किया।

**अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान्।**
**पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः।।५३।।**

**प्रसङ्गः**–शलोकेऽस्मिन् महाकविः कालिदासः प्रज्ज्वलिताग्निसूचकैः पवनोद्भूतैराहुतिगन्धिभिः धूमैराश्रमागतानुतिथीन् पवित्रकारकस्य वशिष्ठाश्रमस्य वर्णनं करोति–

**अन्वयः**–अभ्युत्यिताग्निपिशुनैः, पवनोद्धूतैः आहुतिगन्धिभिः, धूमैः, आश्रन्मुखान्, अतिथीन्, पुनानम्।

**सञ्जीविनी**–अभ्युत्थिताः प्रज्वलिताः। योपयोग्या इत्यर्थः। "समिद्धेः दीवाहुतीर्जुहोति" इति वचनात्। तेषामग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः। आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनः तैर्धूमैराश्रमोन्मुखानतिथीन्पुनानं पवित्रीकुर्वाणम्। कुलकम्।

**वाच्य०**–पुनानः आश्रमः प्रापि।

**चन्द्रिका**–अभ्युत्थिताग्निपिशुनैः=प्रज्वलितवह्निसूचकैः, पवनोद्धूतैः= आहुतिगन्धिभिः=हविरामोदवद्भिः, धूमैः आश्रमोन्मुखान्=वसिष्ठालयागन्तुका-मान्, अतिथीन्=आगन्तून्, पुनानम=पवित्रोकुर्वाणम्। आश्रमं प्रापत्।

**समासः**–अभितः उत्थिताः अभ्युत्थिताः, अभ्युत्थिताश्च ते अग्नयः अम्युत्थिताग्नयः, अभ्युत्थिताग्नीनाँ पिशुनाः अभ्युत्थिताग्निपिशुनाः, तैः अभ्युत्थिताग्निपिशुनैः पवनेन उद्धूताः पवनोद्धूताः, तैः पवनोद्धूतैः। उद्गतं मुखं येषां ते उन्मुखाः, आश्रमे उन्मुखाः आश्रमोन्मुखः तान् आश्रमोन्मुखान्।

**कोशः**–"नभस्वद्वातपवनपवमानप्रभंजनाः", "स्युरोवेशिक आगन्तुरतिथिर्ना गृहागते" इति चामरः। "पिशुनं कुंकुमेऽपि च। कपिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु", "आश्रमो ब्रह्मचर्यादौ वानप्रस्थे मथे वने" इति च मेदिनी। "गन्धोगन्धक आमोदे लेशे सम्बन्धगर्वयोः"इति विश्वः।

**शब्दार्थः**– अभ्युत्थिताग्निपिशुनैः= प्रज्ज्वलित अग्नि के सूचक, पवनोद्धूतैः=हवाओं से आन्दोलित, आहुतिगंन्धिभिः=आहुतियों की सुगन्ध से युक्त, धूमैः=धूएँ से, आश्रमोन्मुखान्=आश्रम आने वाले, अतिथीन्=अभ्यागतों को, पुनानम्=पवित्र करने वाले।

**हिन्दी**–प्रज्वलित अग्नि के सूचक, वायु से उड़ाये गए, आहुति की सुगन्धि से युक्त, धुएँ से आश्रम आ रहे अतिथियों को पवित्र करने वाले आश्रम को प्राप्त किया।

**अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः।**
**तामवारोहयत्पत्नी रथादवततार च।।५४।।**

**प्रसङ्गः**–आश्रमप्राप्त्यनन्तर राजा दिलीपः घोटकेभ्य विश्रामप्रदनाय सारथिमादिश्य रथात् सुदक्षिणामवतारितवान् स्वयञ्चावततारेति सूचयति महाकविः कालिदासोऽत्र।

**अन्वयः**–अथ, सः, यन्तारम्, धुर्यान्, विश्रामय, इति आदिश्य, ताम्, पत्नीम्, रथात्, अवारोहयत्, अवततार च।

**सञ्जीविनी**–अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिं धुरं वहनतीति धुर्यायुग्याः। "धुरो यड्ढकौ" इति यत्प्रत्ययः। "धूर्वहे धूर्यधौरैयधुरीणाः सधुरंधराः" इत्यमरः। धुर्यान्रथाश्वान्विश्रामय विनीतश्रमान्कुर्वित्यादिश्याज्ञाप्य तां पत्नीं रथादवारोहयदवतारितवन्स्वयं चावततार। "विश्रमय" इति ह्रस्वपाठे "जनीजृष०" इति मित्त्वे "मितां ह्रस्वः" इति ह्रस्वः। दीर्घपाठे 'मितां ह्रस्वः" इति सूत्रे 'वा चित्तविरागे" इत्यतो "वा" इतयनुवर्त्य व्यवस्थितविभाषाश्रयणाद् ह्रस्वाभाव इति वृत्तिकारः।

**वाच्य०**–अथ, तेन, यन्तारम् "त्वया", धुर्याः, विश्राभ्यन्ताम्, इति आदिश्य, सा, पत्नी, रथात्, अवारोह्यत, स्वयम्, च अवतेरे।

**चन्द्रिका**–अथ=आश्रमप्राप्त्यनन्तरम्, सः=दिलीपः, यन्तारम्=सारथिम् धुर्यान्=धुर्वहाम् (अश्वान्), विश्रामय=विनीतश्रमान् कुरु, इति=एवम्, आदिश्य =आज्ञाप्य, ताम्=पूर्वोक्ताम्, पत्नीम्=भार्याम् (सुदक्षिणाम्), रथात्=यानात्, अवारोहयत्=अवतारितवान्, च=पुनः, "स्वयम्" इति शेषः। अवततार=अवारुरोह।

**कोशः**–"नियन्ता प्राजिता यन्ता सूतः क्षता च सारथिः। "सव्येष्ठदक्षिणस्थौ च संत्रा रथकुटुम्बिनः", "धूर्वहे", धुर्य्यधौरैयधुरीणाः सधुरन्धराः", "येन चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः" इति चामरः।

**शब्दार्थः**–अथ=आश्रम पहुँचने पर, सः=वह (राजा दिलीप),

यन्तारम्=सारथी को, धुर्यान्=घोड़ों को , विश्रामव=विश्राम दो, इति=इस प्रकार, आदिश्य=आज्ञा देकर, ताम्=उस, पत्नीम्=पत्नी (सुदक्षिणा) को रथात्=रथ से, अवारोहयत्=उतारा, च=और, अवततार=उतरे।

**हिन्दी**–आश्रम पहुँचने के बाद राजा दिलीप ने सारथी को , "घोड़ों को विश्राम दो" इस प्रकार आज्ञा देकर पत्नी को रथ से उतारा और खुद भी उतरे।

**तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः।**
**अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे।।५५।।**

**प्रसङ्गः**–अत्र वशिष्ठाश्रमे जितेन्द्रियमुनयो सस्त्रीकस्य राज्ञो दिलीपस्य स्वागतवन्दनादिकं कृतवन्त इति निर्दिशति महाकविः कालिदासः-

**अन्वयः**–सभ्याः, गुप्ततमेन्द्रियाः, मुनयः, सभार्याय, गोप्त्रे, नयचक्षुषे, अर्हते तस्मै, अर्हणाम्, चक्रु।

**सञ्जीविनी**–सभायां साधवः सभ्याः। "सभायां यः" इति यप्रत्ययः। गुप्ततमेन्द्रिया अत्यन्तनियमितेन्द्रिया मुनयः सभार्याय गोप्त्रे रक्षकाय। नयः शास्त्रमेव चक्षुस्तत्त्वावेदकं प्रमाणं यस्या तस्मै नयचक्षुषें। अत एवार्हते प्रशस्ताय। पूज्यायेत्यर्थः। "अर्हः प्रशंसायाम्" इति शतृप्रत्ययः। तस्मै राज्ञेऽर्हणां पूजां चक्रुः। "पूजानमस्यापचितिः सपर्यार्चार्हणाः समाः" इत्यमरः।

**वाच्य०**–सभ्यैः गुप्ततमेन्द्रियैः, मुनिभिः, अर्हणा चक्रे।

**चन्द्रिका**–सभ्याः=सभासदः, गुप्ततमेन्द्रियाः=जितेन्द्रियाः, मुनयः= वाचंयमाः, सभार्याय=सस्त्रीकाय, गोप्त्रे=रक्षकाय, नयचक्षुषे=नीतिशास्त्रदर्शनाय, अर्हते=पूज्याय, तस्मै=दिलीपाय, अर्हणाम्=पूजाम्, चक्रुः=विदधुः।

**समासः**–गुप्ततमानि इन्द्रियाणि येषां ते गुप्ततमेन्द्रियाः। भार्यया सहितः सभार्यः, तस्मै सभार्याय। नयः चक्षुः यस्य स नयचक्षुः, तस्मै नयचक्षुषे।

**कोश:** – "सभासद: सभास्तारा: सभ्या: सामाजिकाश्चते", "वाचंयमी मुनि:", "पूजा नमस्यापचिति सपर्याऽर्चाऽर्हणा: समा:" इति चामर:।

**शब्दार्थ:** –सभ्या:=सभ्य, गुप्ततमेन्द्रिया:=जितेन्द्रिय, मुनय:=मुनियों ने, सभार्याय=स्त्री के सहित, गोप्त्रे=रक्षा करने वाले, नयचक्षुषें=नीतिशास्त्राऽनुसार चलने वाले, अर्हते= पूज्य, तस्मै=उस (राजा दिलीप की), अर्हणाम्=पूजा, चक्रु:=की।

**हिन्दी** –सभ्य तथा जितेन्द्रिय मुनियों ने, रक्षा करने वाले तथा नीतिशास्त्राऽनुसार चलने वाले अतएव पूज्य, सुदक्षिणा सहित राजा दिलीप की पूजा की।

**विध: तायन्तनस्यान्ते स ददर्श तपोनिधिम्।**
**अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम्।।५६।।**

**प्रसङ्ग:** –श्लोकेऽसिमन् महाकवि: कालिदास: राज्ञो दिलीपस्य वशिष्ठदर्शनविषयकवर्णनं करोति।

**अन्वय:** –स:, सायन्तनस्य, विधे:, अन्ते, अरुन्धत्या, अन्वासितम्, तपोनिधिम्, स्वाहया, अन्वासितं, हविर्भुजम्, इव, ददर्श।

**सञ्जीविनी** –स राजा सायंतनस्य सायंभवस्य। "सायंचिरम्०" इत्यादिना ट्युल्प्रत्यय:। विधेर्जपहोमाद्यनुष्ठानस्यान्तेऽरुंधत्यान्वासितं पश्चादुपवेशनेनोपसे - वितम्। कर्मणि क्त:। उपसर्गवशात्सकर्मकत्वम्। "अन्वास्यैनाम्" इत्यादिवदुपपद्यते। तपोनिधि वप्तिष्ठम्। स्वाहया स्वाहादेव्या। "अथाग्नायी स्वाहा च हुतभुक्प्रिया इत्यमर:। अन्वासितं हविभुंजमिव ददर्श। "समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिक:। जपं होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेत्।। "इत्यनुष्ठानस्य मध्येऽभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम्। अन्वासनं चात्र पतिव्रताधर्मत्वेनोक्तं न कर्माङ्गत्वेन।-विधेरन्त इति कर्मण: समाप्त्यभिधानात्।

**वाच्य०**–तेन अरुन्धत्या अन्वासितः तपोनिधिः, स्वाहया अन्वासितः हविर्भुक्, इव, ददृशे।

**चन्द्रिका**–सः=दिलीपः, सायन्तनस्य=सन्ध्याकालिकस्य, विधेः=विधानस्य, जपहोमादेरित्यर्थः। अन्ते=अवसाने, अरुन्धत्या=एतभाग्न्या प्रसिद्धया पत्न्या, अन्वासितम्=उपवेशितम्, तपोनिधिम्=वशिष्ठम्, स्वाहया="स्वाहा" ख्यया हुतभुक्प्रियया, हविर्भुजम्=अग्निम्, इव=यथा, ददर्श=अवलोकयामास।

**समासः**–तपसां निधिः तपोनिधिः तं तपोनिधिम्।

**कोशः**–"विधिर्विधाने दैवेऽपि", "निधिर्ना शेवधिः", "अवाग्नायी स्वाहा च हुतभुक्प्रिया" इति चामरः। "अन्तं स्वरूपे नाशेऽन्तो स्त्री शेषेऽन्तिके त्रिपु,"हविर्होतव्यमात्रे च सर्पिष्वपि नपुंसकम्" इति च मेदिनी। "तपश्चान्द्रायणादौ स्यार्द्ध में लोकान्तरेऽपि च" इति विश्वः।

**शब्दार्थः**–सः=उस (राजा दिलीप) ने, सायन्तनस्य=संध्याकाल की, विधेः=विधि के, अंते=अन्त में, अरुन्धत्या=अरुन्धती से, अन्वासितम्=पीछे बैठे, तपोनिधिम=वसिष्ठ को, स्वाहया=स्वाहा से, हविर्भुजम=अग्नि के, इव=समान, ददर्श=देखा।

**हिन्दी**–दिलीप ने सायंकाल के कर्त्तव्यों की समाप्ति होने पर, स्वाहा से सेवित अग्नि की तरह अरुन्धती से सेवित वसिष्ठ को देखा।

**तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी।**
**तौ गुरुर्गुरुपत्नी च प्रोत्या प्रतिननन्दतुः।।५७।।**

**प्रसङ्गः**–सपत्नीकं प्रणतं दिलीपं सपत्नीकः कुलगुरुः वशिष्ठ आशीर्वाद प्रादादिति सूचयति महाकविः कालिदासः–

**अन्वयः**–मागधी, राज्ञी, राजा, च, तयोः पादान्, जगृहतुः, गुरुपत्नी, गुरुः च, तौ, प्रीत्या, प्रतिननन्दतुः।

**सञ्जीविनी**–मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोररुन्धतीवसिष्ठयोः पादाञ्जगृहतुः। पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः।

पादग्रहणमभिवादनम्। गुरुपत्नी गुरुश्च कर्त्तारौ। सा च स च तौ सुदक्षिणादिलीपौ कर्मभूतौ। प्रीत्या हर्षेण प्रतिननन्दतुः। आशीर्वादादिभिः संभावयांचक्रतुरित्यर्थः।

**वाच्य०**–मागध्या, रात्र्या, राज्ञर, च तयोः, पादाः जगृहिर, गुरुणा गरुपत्न्या, च प्रीत्या, तौ प्रतिननन्दाते।

**चन्द्रिका**–मागधी=मगधराजपुत्री, राज्ञी=सुदक्षिणा, राजा=दिलीपः, च=पुनः, तयोः=अरुन्धतीवसिष्ठयोः, पादान्=चरणान् जगृहतुः=पस्पृशतुः गुरुपत्नी=अरुन्धती, गुरुः=वसिष्ठः, च=पुनः, तौ=सुदक्षिणादिलीपौ, प्रीत्या=प्रमोदेन, प्रतिननन्दतुः=आशीर्वादादिभिः, संभादवाचक्रतुः।

**समासः**–गुरोः पत्नी गुरुपत्नी।

**कोशः**–"पाः पदङ्घ्रिश्चरणोऽस्त्रियाम्" "मुत्प्रीतिः प्रमादो हर्षः प्रमोदामोदसम्मदाः" इति चामरः। "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे", इति विश्वः।

**शब्दार्थः**–मागधी=मगधराजपुत्री, राज्ञी=रानी सुदक्षिणा, राजा=दिलीप ने, च=और, तयोः=उन दोनों अरुन्धती वसिष्ठ के, पादान्=पैरों को, जगृहतुः=स्पर्श किये, गुरुपत्नी=अरुन्धती, गुरुः=वसिष्ठ ने, च=भी, तौ=उन दोनों (सुदक्षिणा दिलीप) को, प्रीत्या=हर्ष से, प्रतिननन्दतुः=आशीर्वाद दिये।

**हिन्दी**–रानी सुदक्षिणा तथा राजा दिलीप ने अरुन्धती और वसिष्ठ को प्रणाम किये। अरुन्धती तथा वसिष्ठ ने भी हर्ष से सुदक्षिणा और दिलीप को आशीर्वाद दिये।

**तमातिथ्यक्रियाशान्तरथक्षीभपरिश्रमम्।**
**प्रपच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः।।५८।।**

**प्रसङ्गः**–मुनिः वशिष्ठः सत्कारविगतरथसञ्चलनखेदं नृपं दिलीपं राज्ये कुशलमपृच्छदिति निर्दिशति महाकविः कालिदासोऽत्र।

**अन्वयः**–मुनिः, आतिथ्यक्रियशान्तरथक्षोभरिश्रमम्, राज्याश्रममुनिम्, तम्, राज्ये, कुशलम्, प्रपच्छ।

**सञ्जीविनो**–मुनिः।आतिथ्यर्थमातिथ्यम्। "अतिथेर्ज्यः" इति ज्यप्रत्ययः। आतिथ्यस्य क्रिया तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तपोक्तम्। राज्यमेवाश्रमं तत्र मुनितुल्यमित्यर्थः। तं दिलीपं राज्ये कुशलं प्रपच्छ। पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम्। यद्यपि राज्यशब्दः पुरोहिता-दिष्वंतर्गतत्याद्राजकर्मवचनः, तथाप्यत्र सप्ताङ्गवचनः "उपपन्नं ननु शिदं सतस्पङ्गेषु" इत्युत्तरविरोधात्, तथाह मनुः–"स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा बृहत्। सप्तैतानि समस्थानि लोकेऽस्मिन्राज्यमुच्यते"।। इति। तत्र "ब्राह्मणं कुशलं पृच्छत्क्षत्रबन्धुमनामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च"।। इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद् ब्राह्मणोचितः कुशलप्रश्नः एवं कृत इत्यनुशंधेयम्। अत एवोक्तम् राज्याश्रममुनिमिति।

**वाच्य०**–मुनिना, आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमः, राज्याश्रममुनिः, स प्रपच्छे।

**चन्द्रिका**– मुनिः=वाचंयमः, वसिष्ठः इत्यर्थः, आतिथ्यक्रियाशान्तरथ-क्षोभपरिश्रमम्=सत्कारविगतस्यन्दनसञ्चलनखेदम्, राज्याश्रममुनिम्= राज्या-श्रममुनितुल्यम्, तम्=दिलीपम्, राज्ये=स्वशास्यदेशविषये, कुशलम्=क्षेमम्, प्रपच्छ=अपृच्छत्।

**समासः**–अतिथ्यर्थे आतिथ्यम्, आतिथ्यस्य क्रिया आतिथ्यक्रिया, आतिथ्यक्रियया शांतः आतिथ्यक्रियाशान्तः, रथस्य क्षोभः रथक्षोभः, रथक्षोभेण परिश्रमः रथक्षोभपरिश्रमो, आतिथ्यक्रियाशान्तः, रथक्षोभपरिश्रमः यस्य सः आतिथ्यक्रिया शान्तरथक्षोभपरिश्रमः, तम् आतिथ्यक्रियाशान्तरथक्षोभपरिमश्चम्। राज्यमेव आश्रमः राज्याश्रमः, राज्याश्रमे मुनिः राज्याश्रममुनिः, तम् राज्याश्रममुनिम्।

**कोश** – "वांचंयमो मुनिः" "याने चक्रिणि युद्धार्थे शताङ्ग स्पन्दनो रथः" इति चामरः। क्रिया कर्मणि चेष्टायां करणे सम्प्रधारणे। आरम्भोपायशिक्षार्थ-चिकित्सानिष्कृतिष्वपि।।" इति विश्वः।

**शब्दार्थः** –मुनिः=मुनि (वसिष्ठ) ने, आतिथ्यक्रियाशान्तरथक्षोभ-परिश्रमम्=सत्कार से मिट गये हैं, रथ के संचलन से उत्पन्न परिश्रम जिनके ऐसे, राज्याश्रममुनिम्=राज्यरूप आश्रम के मुनि, तम्=(दिलीप) को, राज्ये=राज्य के विषय में, कुशलम्=कुशल, पप्रच्छ=पूछा।

**हिन्दी** –मुनि वसिष्ठ ने सत्कार के द्वारा रथ के संचलन से उत्पन्न परिश्रम से मुक्त, राजरूप आश्रम के मुनि, राजा दिलीप से राज्य के विषय में कुशल प्रश्न पूछे।

**अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः।**

**अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः।।५९।।**

**प्रसङ्गः** –कुशलप्रश्नानन्तरं वशिष्ठदिलीपयोरुभयोः वार्तालापं प्रदर्शयत्यत्र महाकविः कालिदासः –

**अन्वयः** –अथ, विजितारिपुरः, वदताम्, वरः अर्थपतिः, अथर्वनिधेः, तस्य पुरः अर्थ्याम् वाचम् आददे।

**सञ्जीविनी** –अथ प्रश्नानन्तरं विजितारिपुरो विजितशत्रुनगरी वदतां वक्तॄणां वरः श्रेष्ठः "यतश्च निर्धारणम्" इति षष्ठी। अर्थपती राजाथर्वणोऽथर्ववेदस्य मुनेः पुरोऽग्रेऽर्थ्य मिथदिनपेताम्। "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः। वाचमाददे। वक्तुमुपक्रान्तवानित्यर्थः। अथर्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञ-त्वात्तत्कर्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते। कामन्दकः – "शय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः। अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम्"।। इति।

**वाच्य**–अथ विजितारिपुरेण वदतां वरेण अर्थपतिना अथर्वनिधेः तस्य पुरः अर्थ्या वाग् अददे।

**चन्द्रिका**–अथ=कुशलप्रश्नानन्तरम्, विजितारिपुरः=अधिकृतरिपुनगरः, वदतांम्=वक्तृणाम्, वरः=श्रेष्ठः, अर्थपतिः=राजा, अथर्वनिधेः=अथर्ववेदाकरस्य, तस्य=वसिष्ठस्य, पुरः=अग्रे, अर्थ्याम्=अर्थयुक्ताम्, वाचम्=गिरम्, आददे=जग्राह। वक्तुमुपचक्रमे इति भावः।

**समासः**–अरीणाम् पुराणि अरिपुराणि, विजितानि अरिपुराणि येन सः विजितारिपुरः। अर्थस्य पतिः अर्थपतिः। अथर्वणः निधिः अथर्वनिधिः, तस्य अथर्वनिधेः। अर्थात् अनपेता अर्थ्या, ताम् अर्थ्याम्।

**कोशः**–"अगारे नगरे पुरम्", निधिर्ना शेवधिः", स्यात्पुरः पुरुतोऽग्रतः, "आत्मवाननपेतोऽर्थादर्थ्यो" इति चमारः। "अर्थ्य शिलाजतुन्यर्थ्यो बुधे न्याय्ये च वाच्यवत्" इति मेदिनी।

**शब्दार्थः**–अथ=इसके बाद, विजितारिपुरः=शत्रुओं के नगरों को जीतने वाले, वदताम्=वक्ताओं में, वरः=श्रेष्ठ, अर्थपतिः=सम्पति के स्वामी, अथर्वनिधेः अथर्ववेद के विशेषज्ञ, तस्य=उस (वसिष्ठ) के, पुरः=आगे, अर्थ्याम्=अर्थपूर्ण, वाचम्=बात, आददे=करने लगे।

**हिन्दी**–कुशल प्रश्न के बाद, शत्रुओं के नगरों को जीतने वाले, वक्ताओं में श्रेष्ठ, सम्पत्ति के स्वामी, राजा दिलीप, अथर्ववेद के विशेषज्ञ गुरु वसिष्ठ के आगे अर्थ युक्त बात करने लगे।

**उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।**
**दैवोनां मानुषीणां च प्रतिहर्ता त्वमापदाम्।।६०।।**

**प्रसङ्गः**–अत्र राजा दिलीपः कुलगुरोर्वशिष्टस्य माहात्म्यं निर्दिशन् स्वसप्ताङ्गानां कुशलं तं सूचयति–

**अन्वयः**–सप्तसु, अङ्गेषु, शिवम्, उपपन्नम्, ननु, यस्य मे, दैवीनाम्, च मानुषीणाम्, आपदाम्, त्वम्, प्रतिहर्ता।

**सञ्जीविनी**– हे गुरो! सप्तस्वङ्गेषु स्वाभ्यमात्यादिषु। "स्वाभ्य-मात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। "सप्ताङ्गानि" इत्यमरः। शिवं कुशलमुपपन्नं ननु युक्तमेव। नन्ववधारणे। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। कथमित्यत्राहयस्य में दैवीनो देवभ्य आगतानां दुर्भिक्षादीनाम्। मानुषीणां मनुष्येभ्यः आगतानां चोरभ्यादीनाम्। उभयत्रापि "तत आगतः" इत्यण्। "टिड्ढाणञ्० इत्यादिना ङीप्। आपदां व्यसनानां त्वं प्रतिहर्ता वारयितासि। अत्राह कामन्दकः "हताशनो जल व्याधिदुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं ततः।। आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभातृ। पृथिवीपतिभाञ्च नराणां पञ्चधा मतत्।।" इति।

**वाच्य०**–त्वया, प्रतिहर्त्रा, भूयते।

**चन्द्रिका**–सप्तसु=सप्तसंख्यकेषु, अङ्गेषु=स्वामि अमात्य सुहृत्-कोष-राष्ट्र दुर्ग बलसंज्ञकेषु, शिवम्=कुशलम्, उपपन्नम्=युक्तम्, ननु=एव, "यतः" इति शेषः। यस्य=दिलीपस्य, में=मम्, दैवीनाम्=वैधीनाम् (दुर्भिक्षादीनाम्), च=पुनः, मानुषीणाम्=मानवीनाम् (चौरभयादीनाम्) आपदाम्=व्यसनानाम्, त्वम्=भगवान् (वसिष्ठः), प्रतिहर्ता=वारयिता, "असि" इति शेषः।

**कोशः**–"स्वाभ्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। सप्ताङ्गानि", "श्वः श्रेयसं शिवं भद्रं कल्याणं मंगलं शुभम्", "प्रश्नाऽवधारणाऽवनुज्ञाऽनुनयाऽऽमन्त्रणे ननु" इति चामरः।

**शब्दार्थः**–सप्तसु=सातों, अङ्गेषु=अङ्गों में स्वामी अमात्य सुहृत् कोश राष्ट्र दुर्ग बल ये सात अङ्ग हैं। शिवम्= कुशल, उपपन्नम्=युक्तियुक्त, ननु=है ही, (क्योंकि), यस्य=जिस दिलीप का, मे=मेरा, दैवीनाम्=दैवकृत, च=और, मानुषीणाम्=मनुष्यकृत, आपदाम्=विपत्तियों के, त्वम्=आप, प्रतिहर्ता=दूर करने वाले हैं।

**हिन्दी**–मुझको आप जैसे देवी और मानुषी विपत्तियों से उद्धार करने वालों के रहते हुए सातों अङ्गों में कुशल उचित ही है।

**तव मन्त्रकृतो मन्त्रर्दूरात्प्रशमितारिभिः।**

**प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः।।६१।।**

**प्रसङ्गः**–श्लोकेऽस्मिन् राजा दिलीपेन वशिष्ठस्य मन्त्रसामर्थ्यादिव स्वपौरुष फलतीति सूचितमिति कथयति महाकविः कालिदासः।

**अन्वयः**–दूरात्, प्रशमितारिभिः, मंत्रकृतः, तव, मंत्रैः, दृष्टलक्ष्यभिदः, मे, शरा, प्रत्यादिश्यन्ते. इव।

**सञ्जीविनी**–दूरात्परोक्ष एव प्रशमितारिभः। मन्त्रान्कृतवान्मन्त्रकृत्। "सुकर्मपापमन्त्रपुण्येषु कृञः" इति क्विप्। तस्य मन्त्रकृतो मन्त्राणां स्त्रष्टुः प्रयोक्तुर्वा तव। मन्त्रैः कर्तृभिः। दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्र भिन्दन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव। वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इवेत्युत्प्रेक्षा। "प्रत्यादेशो निराकृतिः" इत्यमरः। त्वन्मन्त्रसामर्थ्यदिव न पौरुषं फलतीति भावः।

**वाच्य०**–प्रशमितारयः, मन्त्राः, शरान्, प्रत्यादिशन्ति इव।

**चन्द्रिका**–दूरात्=विप्रकृष्टात्, प्रशमितारिभिः=विनाशितरिपुभिः मंत्रकृतः=मंत्रद्रष्टुः, तव=वसिष्ठस्य, मंत्रैः=शब्दसघातविशेषैः, दृष्ठलक्ष्यभिदः= दर्शनविषयीभूतलक्ष्यभेदनकर्तारः। मे=मम, शराः=बाणाः, प्रत्यादिश्यन्ते= निराक्रियन्ते, इव=यथा।

**समासः**–प्रकर्षेण शमिताः प्रशमिताः प्रशमिताः अरयः यैः ते प्रशमितारयः, तैः प्रशमितारिभिः। दृष्टं च तत् लक्ष्यञ्च दृष्टलक्ष्यं, दृष्टलक्ष्यं भिन्दन्तीति दृष्टलक्ष्यभिदः।

**कोशः**–"दूरं विप्रकृष्टकम्", "रिपौ वैरिसपत्नारिद्विद्द्वेषणदुर्हृवः", "तलक्षं

लक्ष्यं शरव्यं च", "पृषत्कबाणविशिखा अजिह्मगखगाशुगा:। कलम्बमार्गणशरा: पत्री रोप इषर्द्वयो:", "प्रत्यादेशो निराकृति:" इति चामर:।

**शब्दार्थ:**–दूरात्=दूर से ही, प्रशमिताऽरिभि:=शत्रुओं को मारने वाले, मंत्रकृत:=मन्त्रद्रष्टा, तव=आप (वसिष्ठ) के, मंत्रै:=मंत्रों से, दृष्टलभिद:=देखे गये लक्ष्य को ही भेदन करनेवाले, मे=मेरे, शरा:=बाण, प्रत्यादिश्यन्ते=तिरस्कृत किये जा रहे हैं, इव=मानो।

**हिन्दी**–अदृश्यरूप में ही शत्रुओं को मारने वाले, मंत्रद्रष्टा आपके मंत्रों से, प्रत्यभूत लक्ष्य को मारनेवाले मेरे बाण मानो व्यर्थ किये जा रहे हैं।

**हविरावर्जितं होतस्त्वया विधिवदग्निषु।**
**वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम्।।६२।।**

**प्रसङ्ग:**–श्लोकेऽस्मिन् महाकवि: कालिदास: मुनिना वशिष्ठेन वह्निषु हुतं हवनीयं वर्षप्रतिबन्धेन विशुष्यतां सस्यानां वृष्टिर्भवतीति द्वयो: वार्तालापे दिलीपस्य कथनं दर्शयति।

**अन्वय:**–हे होत:, त्वया, 'विधिवत्, अग्निषु, आवर्जितम्, हवि:, अवग्रहविशोषिणाम्, सस्यानाम्, वृष्टि:, भवति।

**सञ्जीविनी**–हे होत:! त्वया विधिवदग्निष्वावर्जितं प्रक्षिप्तं हविराज्यादिकं कर्तृ। अवग्रवो वर्षप्रतिबन्ध:। 'अवे ग्रहो वर्ष प्रतिबन्धे" इत्यप्प्रत्यय:। 'वृष्टिर्वर्ष तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमर:। तेन विशोषिणां विशुष्यतां सस्यानां वृष्टिर्भवति। वृष्टिरूपेण सस्यान्युपजीवयतीति भाव:। अत्र मनु: 'अग्नौ दत्ताहुति: सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं तत: प्रजा:।"

**वाच्य०**– आवर्जितेन, हविषा वृष्टया, भूयते।

**चद्रिका**–हे होत:=हे अग्निहोत्रिन्, त्वया=भवता (वसिष्ठेन), विधिवत्= यथाविधानम्, अग्निषु=वह्निषु, आवर्जितम्=हुतम्, हवि:=हवनीयम्,

अवग्रहविशोषिणाम्=वर्षप्रतिबन्धेन विशुष्यताम्, सस्यानाम्=धान्यानाम्, वृष्टिः=वर्षणम्, भवति=जायते।

**समासः**-अवग्रहेण विशोषीणि अवग्रहविशोषीणि, तेषाम् अवग्रहविशोषिणाम्।

**कोशः**-"विधिर्विधाने दैवेऽपि", "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ", "वृक्षादीनां फलं सस्यम्" इति चामरः। "हविः सर्पिषिः" होतव्ये" इति हैमः।

**शब्दार्थः**-हे होतः=है अग्निहोत्रिन्, त्वया=आपके द्वारा, विधिवत्=शास्त्रोक्त विधि से, अग्निषु=अग्नि में, आवर्जितम्=दी गई, हविः= आहुति, अवग्रहविशोषिणाम्=वर्षा के अभाव मे सूख रहे, सस्यानाम्=अनाजों के लिये, वृष्टिः=वर्षा, भवति=होती है।

**हिन्दी**-हे होतः, आपके द्वारा विधिवत् अग्नि में दी गयी आहुति अनावृष्टि से सूख रहे अनाजों के लिये वृष्टि होती है।

**पुरुषायुपजीविन्यो निरातङ्का निरीतयः।**
**यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम्।।६३।।**

**प्रसङ्गः**-श्लोकेऽस्यिन् महाकविः कालिदासः वशिष्ठदिलीपयोः वार्तालापे प्रजासुखसमृद्धेरेकमात्रकारणं वशिष्ठस्य व्रतादिकमैवेति कथनं सूचयति।

**अन्वयः**-मदीयाः, प्रजाः, पुरुषायुषजीवन्यः, निरातंकाः, निरीतयः यत्, तस्य, त्वद्ब्रह्मवर्चसम्, हेतुः।

**सञ्जीविनी**-आयुर्जीवितकालः। पुरुषस्यायुः पुरुषायुषम् वर्षशतमित्यर्थः। "शतायुर्वे पुरुषः" इति श्रुतेः। "अचतुरविचतुरसुचतुर०" इत्यादिसूत्रेणाच्प्रत्ययान्तो निपातः। मदीयाः प्रजाः पृरुषायुषं जीवन्तीति पुरुषायुष जीविन्यः। निरातङ्का निर्भयाः "आतङ्को भयमाशङ्का" इति हलायुधः। निरीतयोऽतिवृष्टयादिरहिता इति यत्तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसंपत्तिरेव हेतु। 'व्रताध्ययन-संपत्तिरत्येतत्ब्रह्मवर्चसम" इति हलायुधः। ब्रह्मणो वर्चो ब्रह्मवर्चसम्।

"ब्रह्महस्तिभ्यां वर्चसः" इत्यच्प्रत्ययः। "अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः।।" इति कामन्दकः।

**वाच्य०**–मदीयायाभिः, प्रजाभिः पुरुषायुषजीविनीभिः निरातङ्काभिः निरीतिभिः, "यत् भूयते" तस्य, त्वद्ब्रह्मवर्चसेन, एव हेतुना, "भूयते"।

**चन्द्रिका**–मदीया=मामकीनाः, प्रजा=अधीनस्था जनाः, पुरुषायुष जीविन्य=शतवर्षजीवितकाला, निरातङ्काः=निर्भयाः, निरीतयः=अतिवृष्ट्या-दिरहिताः, यत्=पुरुषायुषजीवित्वादिविशिष्टाः, सन्तीति शेषः। तस्य=पुरुषायुष-जीवित्वादेः, त्वद्ब्रह्मवर्चसम्=तव व्रताध्ययनसम्पत्तिः, हेतुः=कारणम्, अस्तीति=शेषः।

**कोशः**–"आयुर्जीविकालः" "रुक्तापशङ्कास्वातङ्कः", "ईतिर्डिम्बप्रवासयोः", "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः शुकाः। स्वचक्र परचक्रञ्च सप्तैता ईतयः स्मृताः" इत्यमरव्याख्या। "आतङ्कोभयाशङ्का", "व्रताऽध्ययनसम्पत्ति-रित्येतद्ब्रह्मवर्चसम्" इति च हलायुधः।

**शब्दार्थः**–मदीयाः=मेरी, प्रजाः=प्रजा, पुरुषायुषजीविन्यः=सौ वर्षों तक जीनेवाली, निरातङ्काः=निर्भय, निरीतयः=अतिवृष्टि आदि से मुक्त, जो (है), तस्य=उसका, त्वद्ब्रह्मवर्चसम्=आप (वशिष्ठ) का व्रत आदि, हेतुः=कारण (है)।

**हिन्दी**–मेरी प्रजा, सौ वर्ष जीने वाली, निर्भय, अतिवृष्टि आदि से मुक्त जो है, उसका कारण आपका व्रत आदि है।

**त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना।**
**सानुबन्धाः कथं न स्युः संपदो मे निरापदः।।६४।।**

**प्रसङ्गः**–वशिष्ठदिलीपयोः वार्तालापे वशिष्ठमङ्गलचिन्तनेनैव राज्ञो दिलीपस्य सम्पदो निरापद आसीदिति कथनं सूचयति महाकविः कालिदासः।

**अन्वयः**–ब्रह्मयोनिना, गुरुणा, त्वया, एवम, चिन्त्यमानस्य, निरापदः, मे सम्पदः, सानुबन्धाः कथम् न स्युः।

**सञ्जीविनी**–ब्रह्मा योनिः कारण यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वयैवमुक्तप्रकारेण चिन्त्यमानस्यानुध्यायमानस्य। अत एव निरापदो व्यसनहीनस्य मे सम्पदः, सानुबन्धाः सानुस्यूतयः। अविच्छिन्ना इति यावत्। कथं न स्युः। स्युरेवेत्यर्थः।

**वाच्य०**–सम्पद्भिः, सानुबन्धाभिः, कथं न भूयेत।

**चन्द्रिका**–ब्रह्मयोनिना=प्रजापतिपुत्रेण, गुरुणा=आचार्येण, त्वया=भवता (वसिष्ठेन), एवम्=इत्थम्, चिन्त्यमानस्य= ध्यायमानस्य, निरापदः–व्यसनरहितस्य, मे=मम, सम्पदः=धनधान्यादयः, सानुबन्धाः=अविच्छिन्नाः, कथम्=केन प्रकारेण, न=नहि, स्युः=भवेयुः।

**समासः**–ब्रह्मा योनिः यस्य सः ब्रह्मयोनिः, तेन ब्रह्मयोनिना। अनुबन्धैः सहिताः सानुबन्धाः निर्गता आपदः यस्मात् सः निरापत्, तस्य निरापदः।

**कोशः**–"सम्पदि, सम्पत्तिः श्रीश्च लक्ष्मीश्च" इत्यमरः। "अनुबन्धस्तु बन्धें स्याद दोषोत्पादे विनश्वरे। मुख्यानुयायिबाले च प्रकृतस्याऽनुवर्तते।।" "सभ्पद्भूतौ गुणोत्कार्षे हारभेदऽपि च स्त्रियाम्" इति च मेदिनी।

**शब्दार्थः**–ब्रह्मयोनिन=ब्रह्मा के पुत्र, गुरुणा=आचार्य, त्वया=आप (वसिष्ठ) के द्वारा, एवम्=इस प्रकार, चिन्त्यमानस्य=ध्यान दिये जाने वाले निरापदः=आपत्तियों से रहित, मे=मेरी, सम्पदः=सम्पत्तियां, सानुबन्धाः= अविच्छिन्न, कथम=कैसे, न=नहीं, स्युः=हों।

**हिन्दी**–ब्रह्मा के मानसपुत्र तथा मेरे कुलगुरु आप (वसिष्ठ) के द्वारा इस प्रकार ध्यान दिये जाने पर आपत्तियों से रहित मेरी सम्पत्ति क्यों न बनी रहे।

**किन्तु वध्वां तर्वतस्यामद्रष्टसदृशप्रजम्।**
**न मामवति सद्वीपा रत्नसूरपि मेदिनो।।६५।।**

**प्रसङ्गः**–वशिष्ठदिलीपयोः वार्तालापे पुत्ररहितां सुदक्षिणां दृष्टवा राजा दिलीपः सप्तद्विपया रत्नप्रसवया पृथिव्यापि सुखं न प्राप्तवानिति कथनेन

सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाध्यमिति सूचितं महाकविना कालिदासेनात्र।

**अन्वयः**–किन्तु, तव एतस्याम्, वध्वाम, अदृष्टसदृशप्रजम्, माम्, रत्नसू, अपि, मेदिनी, न, अवति।

**सञ्जीविनी**–किंतु तवैतस्यां वधवां स्नुषाषा, वधूर्जाया स्नुषा चैव" इत्यमरः। अदृष्टा सदृश्यनुरूपा प्रजा येन त मा सद्वीपाऽपि। रत्नानि सूयत इति रत्नसूरपि। 'सत्सूद्विप०" इत्यादिना क्विप्। मेदिनी न प्रोणाति। अवधातू रक्षणगति प्रीत्याद्यर्थेषूपदेशादत्र प्रीणनें रस्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाध्यमिति सूचितम।

**वाच्य०**–अदृष्टसदृशप्रजः अहम् सद्वीपया रत्नसुवा अपि मेदिन्या, न अव्ये।

**चन्द्रिका**–किन्तु=परन्तु, तव=भवतः (वशिष्ठस्य), एतस्याम्=अस्याम् (सुदक्षिणायाम्), वध्वाम्=स्नुषायाम्, अदृष्टसदृशप्रजम=अनजवलोकिता–ऽनुरूपसन्ततिम्, माम्=दिलीपम्, सद्वीपा=सप्तद्वीपा, अपि, रत्नसूः=मणिप्रसविनी, मेदिनी=पृथिवी. न=नहि, अवति=प्रीणाति।

**समासः**–न ५८। अदृष्टा, अदृष्टा सदृशी प्रजा येन स अदृष्टसदृशप्रजः, तम, अदृष्टसदृशप्रजम्। द्वीपैः सहिता सद्वीपा।

**कोशः**–'वधूर्जाया स्नुषाचैव", 'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही" इति चामर।

**शब्दार्थ**–किन्तु=परन्तु, तव=आप (वसिष्ठ) की, एतस्याम्=इस (सुदक्षिणा): वध्वाम्=पतोहू में, अदृष्टसदृशप्रजम्=अपने समान पुत्र को नहीं देखनेवाले, माम्=मुझ (दिलीप) को, सद्वीपा–सातों द्वीपों वाली, रत्नसूः=रत्न प्रसव करनेवाली, मेदिनी=पृथिवी, न=नहीं, अवति=प्रसन्न कर पाती है।

**हिन्दी**–किन्तु आप (वसिष्ठ) की इस (सुदक्षिणा) पतोहू में अपने समान पुत्र को नहीं देखने वाले मुझ (दिलीप) को सात द्वीपों वाली रत्न, प्रसव करनेवाली, पृथिवी भी प्रसन्न नहीं कर पाती।

**नू नं मत्तः परं वंश्याः पिण्डविच्छददर्शिनः**
**न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः।।६६।।**

**प्रसङ्गः**–वशिष्ठ दिलीपयोः वार्तालापे निष्पुत्रिदिलीपानन्तरं पितृपिण्डप्रदायकं कमप्यन्यं पुत्रदृष्ट्वा तस्य पितरः स्वदत्तश्राद्धभोजनं पर्याप्तरूपेण न स्वीकुर्वन्तीति कथनं सूचयत्यत्र महाकविः कालिदासः।

**अन्वयः**–मत्तः परम् पिण्डविच्छेददर्शिनः वंश्याः, स्वधासंग्रसतत्पराः, श्राद्धे–प्रकामभुजः, नूनम्, न।

**सञ्जीविनी**–मत्तः परं मदनन्तरम् "पञ्चम्यास्तसिल्" पिण्डविच्छेददर्शिन पिण्डदानविच्छेदमुत्प्रेक्षमाणाः। वंश्याः पितरः। स्वधेत्यव्ययं पितृभोज्ये वर्तते। तस्याः संग्रहे तत्परा आसक्ताः सन्तः श्राद्धे पितकर्मणि। "पितृ दानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः" इत्यमरः। प्रकामभुजः पर्याप्तभोजिनो भवन्ति नूनं सत्यम्। "कामं। प्रकामं पर्याप्तम्" इत्यमरः। निर्धना ह्यापद्धनं कियदपि संगृह्णन्तीति भावः।

**वाच्य०**–पिण्डविख्छेददर्शिभिः वंश्यैः स्वधासंग्रहतत्परैः प्रकामभुज्भिः भूयते।

**चन्द्रिका**–मत्तः=स्वतः (दिलीपतः), परम्=अनन्तरम्, पिण्डविच्छेद–दर्शिनः=पिण्डापायप्रेक्षकाः, वंश्याः=पितरः, स्वधासंग्रहतत्पराः= पितृभोज्य–सङ्कलनरताः, "सन्तः" इति शेषः। श्राद्धे=पितृकर्मणि, प्रकामभुजः= पर्याप्तभोजिनः, न=नहि, "भवन्ति" इति शेषः नूनम्=निश्चितम्।

**समासः**–विण्डस्य विच्छेदः पिण्डविच्छेदः, पिण्डविच्छेदं पश्यन्तीति पिण्डविच्छेददर्शिनः। स्वधायाः संग्रहः स्वधासंग्रहः, तस्मिन् पराः तत्पराः, स्वधासंग्रहे तत्पराः स्वधासंग्रहतत्पराः। प्रकामम् भुञ्जतीति प्रकामभुजः।

**कोशः**–"पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः" "कामं प्रकामं पर्याप्तम्" इति चामरः। "पिण्डोगोले बले सान्द्रे देहागारैकदेशयोः। देहमात्रे निर्वापे च गोलसह्लिकयोरपि "धङ्ग्रहो बृहत्युत्तुङ्गग्रहसक्षेपयोरपि" इति च मेदिनी।

**शब्दार्थ:**—मत्त:=मुझ (दिलीप) से, परम्=आगे, पिण्डविक्छेद-दर्शिन=पिण्डविच्छेद को देखने वाले, वंश्या=पितर, स्वधासत्रग्रहतत्परा:=भोज्य बटोरने में लगे हुए, श्राद्धे=श्राद्ध में, प्रकामभुज:=पर्याप्त भोजन करने वाले, न=नहीं हैं, नूनम्=यह निश्चित है।

**हिन्दी**—मेरे बाद पिण्डलोप को देखनेवाले, भोज्य पदार्थों के बटोरने में लगे हुए मेरे पितर श्राद्ध में पर्याप्त भोजन नहीं करते हैं।

**मत्परं दुर्लभं मत्व: नूनमावर्जितं मया।**
**पय: पूर्वै: स्वनिश्वासै: कवाष्णमुपभुज्यते।।६७।।**

**प्रसङ्ग:**—वशिष्ठ दिलीपयो: वार्तालापे निष्पुत्रिदिलीपानन्तरं पितृजल प्रदायकं कमप्यन्य् पुत्रमदृष्ट्वा तस्य पितर: स्वदत्तजलं दु:खेन पिबन्तीति कथनं सूचितमत्र महाकवि: कालिदास:।

**अन्वय:**—मत्, परम्, दुर्लभम्, मत्वा, मया, आवर्जितम्, पय:, पूर्वै:, स्वनि:श्वासै:, कवोष्णम्, उपभुज्यते, नूनम्।

**सञ्जीविनी**—मत्परं मदनन्तरम्। "अन्यारादितरर्तेदिक्शब्दाञ्चुत्तर-पदाजाहियुक्ते" इत्यनेन पञ्चमी। दुर्लभं मत्वा मयाऽऽवर्जितं मद्दत्त पय: पूर्वै: पितृभि: स्वनि:श्वासैर्दु:खजै: कवोष्णमीषदुष्णं यथा तथोपभुज्यते। नूनमिति तर्कें। कवोष्णमिति कुशब्दस्य कवादेश:। "कोष्णं कवोष्णं मदोष्णं कदुष्णं त्रिषु तद्वति" इत्यमर:।

**वाच्य०**—पूर्वे, कवोष्णम्, उपभुञ्जते।

**चन्द्रिका**—मत्=स्वस्मात्, परम्=अनन्तरम्, दुर्लभम्=दुष्प्राप्यम्, मत्वा=ज्ञात्वा, मया=दिलीपेन, आवर्जितम्=दत्तम्, पय:=जलम्, पूर्वै:=पितृभि:, स्वनि:श्वासै:=श्वासै:, कवोष्णम्=मन्दोष्णम्, उपभुज्यते=पीयते, नूनम्=निश्चितम्।

**समास:**—स्वोज्ञानावात्मनी स्वनि:श्वासा:, तै: स्वनि:श्वासै:।

**कोश:**–"स्वो ज्ञातानात्मनि स्व त्रिष्वात्मीये स्वोऽस्त्रियान्धने", कोष्णं कवोष्ण मन्दोष्ण कटुष्णं त्रिषु तद्वति" इति चामर:।

**शब्दार्थ:**–मत्=मुझ (दिलीप) से, परम्-आगे, दुर्लभम्=दुर्लभ, मत्वा=मानकर, मया=मुझ (दिलीप) से, आवर्जितम्=दिया गया, पय:=पानी, पूर्वै:=पितरों के द्वारा, स्वनि:श्वासै:=अपनी साँसों से, कवोष्णम्=थोड़ा गरम, उपभुज्यते=पिया जाता है, नूनम्=निश्चित है।

**हिन्दी**–मेरे बाद दुर्लभ समझ कर मुझसे दिया गया जल, पितरों के द्वारा, अपनी साँसों से थोड़ा गरम, (दु:ख के कारण) पिया जाता है यह निश्चित है।

**सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलित:।**
**प्रकाशश्चाप्रकाशश्च लोकाऽलोक इवाचल:।।६८।।**

**प्रसङ्ग:**–वशिष्ठदिलीपयो: वार्तालापे राजा दिलीपो यज्ञेन रेवानाभृणान्मुक्त: सन्त प्रसन्नो भवति तथाच पितृणामृणादमुक्त: सन्नप्रसनो भवतीति कथनं सूचयति महाकवि: कालिदासोऽत्र।

**अन्वय:**–इज्याविशुद्धात्मा, प्रजालोपनिमीलित:, स:, अहम्, लोकाऽलोक:, अचल:, इव, प्रकाश:, च, अप्रकाश:, च "अस्मि"।

**सञ्जीविनी**–इज्या याग:। "व्रजयजोर्भावे क्यप्" इति क्यप्प्रत्यय:। तथा विशुद्धात्मा विशुद्धचेतन:। प्रजालोपेन संतत्यमावेन निमीलित: कृतनिमीलन: सोऽहम्। लोक्यत इति लोक:। न लोक्यत इत्यलोक: लोकश्चालोकश्चात्र स्त इति, लोकश्चासावलोकंश्चेति वा। "लोकालोकश्चक्रवाल:" इत्यमर:। प्रकाशत इति प्रकाशश्च देवर्णविमोचनात्। न प्रकाशत इत्यप्रकाशश्च पितृणामृणाविमोचनात्। पचाद्यच्। अस्मीति शेष:। लोकाचलोऽप्यन्त: सूर्यसंपर्काद् बहिस्तमोव्याप्त्या च प्रकाशश्चाप्रकाशश्चेति मन्तव्यम्।

**वाच्य०**–इज्याविशुद्धात्मना, प्रजालोपनिमीलितेन "मया" लोकालोकेन, अचलेनेव, प्रकाशेन, अप्रकाशेन, च भूयते।

**चन्द्रिका**–इच्याविशुद्धाऽऽत्मा=यागपूतान्तकरण:, प्रजालोपनिमीलित:= पुत्राऽभावाऽनुत्फुल्ललोचन:, स:=पूर्वोक्त:, अहम्=दिलीप:, लोकालोक:= चक्रवाल:, अचल:=पर्वत:, इव=यथा, प्रकाश=दीप्तिमान्, पक्षान्तरे प्रसन्न:। च=पुन:, अप्रकाश:–तिमिराच्छन्न:, पक्षान्तरे अप्रसन्न:, च=पुन: "अस्मि"।

**समास:**–इज्यया विशुद्ध: इज्याविशुद्ध:, इज्याविशुद्ध: आत्मा यस्य स: इज्याविशुद्धात्मा। प्रजाया: लोप: प्रजालोप: प्रजालोपेन निमीलित: प्रजालोपनिमीलित:। लोकश्चासौ अलोकश्च लोकालोक:। न चल: अचल:। न प्रकाश: अप्रकाश:।

**कोश:**–"लोकालोकश्चक्रवाल:", "अद्रिगोत्रगिरिग्रावाचलशैल-शिलोच्चया:" "प्रकाशे द्योत आतप:," इति चामर:। "इज्या दानेध्वरेऽर्चायां सङ्गमे स्त्रीगुरौ त्रिषु" इति मेदिनी।

**शब्दार्थ:**–इज्याविशुद्धात्मा=यज्ञ करने से शुद्ध आत्मा वाला, प्रजालोपनिमीलित:=पुत्र के अभाव से आँखें बन्द किये हुए, स:=वह, अहम्=मैं (दिलीप), लोकालोक:=चक्रवाल, अचल:=पर्वत के, इव=समान, प्रकाश:=प्रकाशयुक्त, च=और, अप्रकाश:=प्रकाशरहित, च=और, अस्मि=हूं। यज्ञ के द्वारा देव ऋण से मुक्त होने पर प्रकाश युक्त, अर्थात् प्रसन्न, पुत्र के अभाव में पितृऋण से नहीं मुक्त होने पर अप्रकाशयुक्त अर्थात् अप्रसन्न हूँ।

**हिन्दी**–यज्ञ से शुद्धात्मा तथा पुत्र के अभाव से आँखें बन्द किया हुआ मैं लोकालोक वर्वत के समान प्रकाश (प्रसन्न) और अप्रकाश (अप्रसन्न) दोनों हूँ।

**लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम्।**
**संतति: शुद्धवंश्या हि परत्रेह च शर्मणे।।६९।।**

**प्रसङ्ग:**–वशिष्ठ दिलीपयो: वार्तालापे तपो दानप्राप्तपुण्यं परलोकसुखकरं भवति, किन्तु शुद्धवंशोत्पन्न: पुत्र: लोकलोकरन्तरसुखकरो भवतीति दिलीपस्य

कथनेन तपोदानप्राप्तपुण्यापेक्षया पुत्रस्य श्रेष्ठत्व दर्शयत्यत्र महाकविः कालिदासः।

**अन्वयः**–तपोदानसमुद्भवम्, पुण्यम्, लोकान्तरसुखम्, शुद्धवंश्या, सन्ततिः, हि, परत्र, इह, चत्र, शर्मणे।

**सञ्जीविनी**–समुद्भवत्यस्मादिति समुद्भवः कारणम् तपोदाने समुद्भवो यस्य तत्तपोदानसमुद्भवं यत्पुण्यं तल्लोकान्तरे परलोके सुखं सुखकरम्। शुद्धवंशे भवा शुद्धवंश्या संततिर्हि परत्र परलोके, इह च लोके शर्मणे सुखाय। "शर्मशातसुखानि च" इत्यमरः। भवतीति शेषः।

**वाच्य०**–तपोदानसमुद्भवेन, पुण्येन, लोकान्तरसुखेन, "भूयते", शुद्धवंश्यया, सन्तत्या, परत्रेह च शर्मणे, भूयते।

**चन्द्रिका**–तपोदानसमुद्भवम्=तपस्त्यागजन्यम्, पुण्यम्=धर्मम्, लोकान्तरसुखम्= परत्र सुखकरम्, शुद्धवंश्या=निर्दृष्टकुलसम्भवा, सन्ततिः= प्रजा, हि=यतः परत्र=लोकान्तरे, इह=अत्र लोके, च=पुनः, शर्मणे=सुखाय, भवतीति शेषः।

**समासः**–तपश्च दानञ्च तपोदाने, तपोदानाभ्यां समुद्भवः यस्य तत् तपोदानसमुद्भवम्। अन्यो लोकः लोकान्तरम् लोकान्तरे सुखम्, लोकान्तरसुखम्। शुद्धश्चासौ वंशश्च शुद्धवंशः, शुद्धवंशे भवा शुद्धवंश्या।

**कोशः**–"शर्मशातसुखानि च च", इत्यमरः। "सन्ततिर्थोत्रजनम", "हि हेतावधारणे" इति चामरः।

**शब्दार्थः**–तपोदानसमुद्भवम्=तपस्या और दान से होने वाले, पुण्यम्=धर्म, लोकान्तरसुखम्=परलोक में सुख देनेवाला है। शुद्धवंश्या=शुद्धकुल में उत्पन्न, सन्ततिः=सन्तान हि=जिस लिये कि, परत्र=परलोक में, इह=इस संसार में, च=और, शर्मणे=सुख के लिये होती है।

**हिन्दी**–तप और दान से होने वाला धर्म परलोक में सुख देता है, किन्तु शुद्ध वंश में उत्पन्न सन्तान इहलोक और परलोक दोनों लोकों में सुख देती हैं।

**तया हीनं विधातर्मां कथं पश्यन्न दूयसे।**
**सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम्।।७०।।**

**प्रसङ्गः**—वशिष्ठ दिलीपयोः वार्तालापे निष्पुत्रिणं मां दृष्ट्वा स्वयमेव प्रेम्या जलसेकेन वर्धितं फलरहितवृक्षमिव कथं न परितप्यस इति दिलीपस्य निदिशत्यत्र महाकविः कालिदासः।

**अन्वयः**—हे विधातः, तया, हीनम्, माम्, स्नेहात् स्वयम्, सिक्तम्, बन्ध्यम्, आश्रमवृक्षकम्, इव, पश्यन्, कथम्, न दूयसे।

**सञ्जीविनी**—हे विधातः! स्रष्ट! तया संतत्या हीनमनपत्यं माम्। स्नेहात्प्रेम्णा स्वयमेव सिक्तं जलसेकेन वर्धितं वन्ध्यमफलम्। "वन्ध्योऽफलोऽवकेशी च" इत्यमरः। आश्रमस्य वृक्षकं वृक्षपोतमिव पश्यन्कथं न दूयसे न परिप्यसे। विधातरित्यनेन समर्थोऽप्युपेक्षस इति गम्यते।

**वाच्य०**—पश्यता, त्वया, कथम्, न, दूयते।

**चन्द्रिका**—हे विधातः=प्रजापते ( हे गुरो वसिष्ठ), तया=सन्तत्या, हीनम=रहितम्, माम्=दिलीपम्, स्नेहात्=प्रेम्णः, स्वयम्=आत्मना, सिक्तम्=दत्तजलम् वन्ध्यम्=निष्फलम्, आश्रमवृक्षकम्=आलयलघुतरुम्, इव=यथा, पश्यन्=अवलोकयन्, कथम्=कस्मात्, न=नहि, दूयसे=परितप्यसे।

**समासः**—आश्रमस्य वृक्षकः आश्रमवृक्षकः, तम् आश्रमवृक्षकम्। (वृक्ष एव वृक्षकः, अनुकम्पायां कः)।

**कोशः**—"स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः", "वन्ध्योऽ-फलोऽअकेली च" इति चामरः। "आश्रमो ब्रह्मचर्यादौ वानप्रस्थे मठे वने" इति मेदिनी।

**शब्दार्थः**—हे विधातः=हे प्रजापति (वसिष्ठ), तया=उस (सन्तति) से, हीनम्=रहित, माम्=मुझ (दिलीप) को, स्नेहात्=स्नेह से, स्वयम्=अपने ही द्वारा, सिक्तम्=सींचे गये, वन्ध्यम्=फल रहित, स्वाश्रमवृक्षकम्=आश्रम के छोटे वृक्ष के, इव=समान, पश्यम्=देखते हुए, कथम्=कैसे, न=नहीं, दूयसे=दुःखी होते हैं।

**हिन्दी**–हे विधातः आप सन्तान से रहित मुझको, स्नेह से अपने ही द्वारा सींचे गये, फलरहित, आश्रम के छोटे वृक्षों के समान देखकर क्यों नहीं दुःखी होते हैं।

**असह्यपीडं भगवन्नृणमन्त्यमवेहि मे।**
**अरन्तुदमिवालानमनिर्वाणस्य दन्तिनः।।७१।।**

**प्रसङ्गः**–वशिष्ठदिलीपयोः वार्तालापे राज्ञो दिलीपस्य पैतृकमृणमती-वासह्यपीडाप्रदमिति कथनं सूचयत्यत्र महाकविः कालिदासः।

**अन्वयः**–हे भगवन्, मे, अन्त्यम् ऋणम्, अनिर्वाणस्यः, दन्तिनः, अरुन्तुदम्, आलानम्, इव असह्यपीडम्, अवेहि।

**सञ्जीविनी**–हे भगवन्! मे ममन्त्यमृणं पैतृकमृणम्। अनिर्वाणस्य मज्जनरहितस्य। "निर्वाणं निर्वृतौ मोक्षे विनाशे गमज्जने इति यादवः। दन्तिनो मजस्य। अरुर्मर्म तुदतीत्यरुन्तुदं मर्मस्पृक्। "व्रणोऽस्त्रियामीर्मरुः" इति, "अरुन्तुदं तु मर्मस्पृक्" इति चामरः विध्वरुषोस्तुदः" इति खश्प्रत्ययः, "अरुर्द्विषत्" इत्यादिना मुमागमः। आलानं बन्धनस्तम्भमिव। आलनं बंधनस्तम्भे" इत्यमरः असह्या सोढुमशक्या पीड़ा दुःखं यस्मिंस्तदवेहि। दुःसह दुःखजनकं विद्धीत्यर्थः। "निर्वाणोत्योनशयनानि त्रीणि जगकर्माणि" इति पालकाप्ये। "ऋण देवस्य यागेन ऋषीणां दानकर्मणा। संतत्या पितृलोकानां शोधयित्वा परिव्रतेज्"।

**वाच्य०**–त्वया, अवेयताम्।

**चन्द्रिका**–हे भगवन्=हे ऐश्वर्यशालिन्, मे=मम (दिलीपस्य) अन्त्यम्=चरमम्, पैतृकमित्यर्थः। ऋणम्=पर्युदञ्चनम्, अनिर्वाणस्य=मज्जनरहितस्य, दन्तिनः=गजस्य, अरुन्तुदम्=मर्मस्पृक्, आलानम्=बन्धनस्तम्भः, इव=यथा, असह्यपीडम्=अक्षम्यव्यथम्, अवेहि=जानीहि।

**समासः**–न सह्या असह्या, असह्य पीडा यस्मिन् तद् असह्यपीडम्, तद् असह्यपीडम्।

**कोशः**—"अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः", "स्यादृणं पर्य्युदञ्चनम्।" "दन्तीदन्तावलो हस्ती द्विरदोऽनेकपो द्विपः", "अरुन्तुदन्तु मर्मस्पृक्" "आलानं बन्धनस्तम्भे", "पीडा बाधा व्यथा दुखमामनस्यं प्रसूतिजम्। स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत्" इति चामरः। "निर्वाणं निवृत्तौ मोक्षे विनाशे गजमज्जीने" इति यादवः।

**शब्दार्थः**—हे भगवान्=हे षाड्गुण्यशालिन्, मे=मेरा, अन्त्यम्=अन्तिम, ऋणम्=ऋण, अनिर्वाणस्य=बिना स्नान किये, गजस्य=हाथी के, अरुन्तुदम्=मर्मस्पर्शी, आलानम्=खूंटे के, इव=समान, असह्यपीडम्=असह्य दुःखों वाला, अवेहि=जाने।

**हिन्दी**—हे भगवान्, मेरे अन्तिम ऋण अर्थात् पितृऋण को, बिना स्नान किये हाथी के मर्मस्थल को छूने वाले खूंटे के समान असह्यपीड़ा देने वाला समझिये।

**तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि।**
**इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः।।७२।।**

**प्रसङ्गः**—वशिष्ठदिलीपयोः वार्तालापे पैतृकादृणान्मोचने वशिष्ठ एवो पायनिर्देशक इति दिलीपस्य कथनं सूचयत्यत्र महाकविः कालिदासः।

**अन्वयः**—हे तात, तस्मात्, तथा, मुच्ये तथा, संविधातुम्, अर्हसि, हि, इक्ष्वाकूणाम्, दुरापे, अर्थे, सिद्धयः, त्वदधीनाः।

**सञ्जीविनी**—हे तात! तस्मात्पतृकाकणाद्यथा मुच्ये मुक्तो भवामि। कर्मणि लट् तथा संविधातुं कर्तुमर्हसि। हि यस्मात्कारणादिक्ष्वाकूणामिक्ष्वा-कुवंश्यानाम्। तद्राजत्वाद् बहुष्वणो लुक्। दुरापे दुष्प्राप्येऽर्थे। सिद्धयस्त्वदधीना-स्त्वदायत्ताः। लक्ष्वाकूणामिति शेषे षष्ठी। "न लोक"—इत्यादिना कृद्योगे षष्ठीनिषेधात्।

**वाच्य०**—मया मुच्यते, त्वया अर्ह्यते, सिद्धिभिः त्वदधीनाभिः भूयते।

**चन्द्रिका**–हे तात=हे पितः, तस्मात्=पितृऋणात्, यथा=येन प्रकारेण, मुच्ये=मुक्तो भवामि, तथा=तेन प्रकारेण, संविधातुम्=कर्तुम्, "त्वम्" इति शेषः। अर्हसि=योग्योऽसि, हि=यतः, इक्ष्वाकूणाम्=इक्ष्वाकुवंश्याना०, दुराये=अलभ्ये, अर्थे=प्रयोजने, सिद्धयः=फलनिष्पत्तयः, त्वदनीनाः=भवदायत्ताः।

**समासः**–त्वयि अधीनाः त्वदधीनाः। इक्ष्वाकोः वंश्याः इक्ष्वाकवः, तेषाम्।

**कोशः**–तातस्तु जनकः पिता" इत्यमरः। "अर्थो हेतो प्रयोजने। विवृत्तौ विषये वाच्ये प्रकाशद्रव्यवस्तुषु इति हैमः।

**शब्दार्थः**–हे तात–हे पितः, तस्मात=उस (पितृ ऋण) से यथा=जिस प्रकार, मुच्ये=मुक्त हो जायँ तथा=वैसा, संविधातुम=करने में, अर्हसि=योग्य हैं, हि=जिस लिये कि, इक्ष्वाकूणाम्=इक्ष्वाकुवंशी राजाओं के, दुरापे=दुष्प्राप्य, अर्थे=प्रयोजन में, सिद्धयः=सिद्धियाँ, त्वदधानाः=आपके आधीन हैं।

**हिन्दी**–हे तात! पितृऋण से जिस प्रकार मुक्त हो सकूँ वैसा करने में आप समर्थ हैं, क्योंकि इक्ष्वाकुवंशी राजाओं के दुष्प्राप्य अर्थों की सिद्धि आपके ही आधीन हैं।

**इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।**
**क्षणमात्रमृषिस्तस्थौ सुप्तमोन इव ह्रदः।।७३।।**

**प्रसङ्गः**–वशिष्ठदिलीपयोः वार्तालापे राज्ञा दिलीपेन विज्ञापितो वशिष्ठः पुत्रजन्मावरोधकारणज्ञानाय क्षणमात्रं ध्याननिमीलितनेवः तस्थाविति सूचयत्यत्र महाकविः कालिदास।

**अन्वयः**–इति, राज्ञा, विज्ञापितः, ऋषिः, ध्यानस्तिमितलोचनः क्षणमात्रम्, सुप्तमीनः ह्रद" इव, तस्थौ।

**सञ्जीविनी**–इति राज्ञा विज्ञापित ऋषिर्ध्यानेन स्तिमिते लोचने यस्य ध्यानस्तिमितलोचनो निश्चलाक्षः सन्क्षणमात्रं सुप्तमीनोह्रद इव तस्थौ।

**वाच्य०**–विज्ञापितन, ऋषिणा, ध्यान स्मितलोचनेन, सत्ता, सुप्मीदेन, ह्रदेन, इव तस्थे।

**चन्द्रिका**–इति=एवम्, राज्ञा=दिलीपेन, विज्ञापित:=निवेदित: ऋषि:=मंत्रद्रष्टा (वसिष्ठ:), ध्यानस्तिमितलोचन:=चिन्तानिमीलितनेत्र:, क्षणमात्रम्=त्रिशत्कलात्मककालं यावत्, सुप्तमीन:=निद्रितमत्स्य:, ह्रद:=अगाधजल:, इव=यथा, तस्थौ=अस्थात्।

**समास:**–ध्यानेन स्तिमिते ध्यानस्तिमिते ध्यानस्तिमित लोचने यस्य स: ध्यानस्तिमितलोचन:। सुप्ता: मीना: यस्य स: सुप्तमीन:।

**कोश:**–पृथुरोमा झसो मत्स्यो मीनो वैसारिणोऽण्डज:। विसार: शकली "तज्ञाऽगाधजलो ह्रद: इति चामर:। "क्षण कालविशेषे स्यात् पर्वव्यवसरे मुदे। व्यापारविकलत्वे च वरतंत्रत्वमन्ययो: इति हैम:।

**शब्दार्थ:**–इति=इस प्रकार, राज्ञा=राजा (दिलीप) के द्वारा, विज्ञापित:= निवेदन किये गये, ऋषि:=मत्रद्रष्टा (वसिष्ठ), ध्यानस्तिमितलोचन:=आँखें बन्द कर ध्यानमग्न, क्षणमात्रम्=क्षणभर, सुप्तमीन:=सोई हुई मछलियों वाले, ह्रद:=तालाब के, इव= समान, तस्थौ=रहे।

**हिन्दी**–राजा दिलीप के द्वारा इस प्रकार निवेदन किये जाने पर ऋषि वसिष्ठ क्षणभर, सोई हुई मछलियों वाले ह्रद की तरह शान्त, आखें बन्द कर ध्यानमग्न होकर बैठे।

**सोऽपश्यत्प्रणिधानेन सन्तते: स्तम्भकारणम्।**
**भावितात्मा भुवो भतुरथैनं प्रत्यबोधयत्।।७४।।**

**प्रसङ्ग:**–वशिष्ठदिलीपयो: वार्तालापे मुनि: वशिष्ठो दिलीपस्य पुत्रजन्मावरोध कारणं ज्ञातवान्, तथा च तं प्रत्यबोधदिति कथयति महाकवि: कालिदासोऽत्र।

**अन्वय:**–स:, प्रणिधानेन, भावितात्वा, भुव:, भर्तु:, सन्तते:, स्तम्भकारणम्, अपश्यत् अथ, एनम्, प्रत्यबोधयत।

**सञ्जीविनी**—स मुनिः प्रणिधानेन चित्तैका भ्र्येण भावितात्मा शुद्धान्तःकरणो भुवो भर्तुर्नृपस्य संततेः स्तम्भकरणं सन्तानप्रतिबन्धकारणमपश्यत्। अथानन्तरमेनं नृपं प्रत्यबोधयत्। स्वदृष्टं ज्ञापितवानित्यर्थः। एनमिति "गतिबुद्धि" इत्यादिनाणि कर्तुः कर्मत्वम्।

**वाच्य०**—भावितात्मना अदृश्यत, एषः प्रत्यबोध्यत।

**चन्द्रिका**—सः=वसिष्ठः, प्रणिधानेन=चित्तैकाग्र्येण, भावितात्मा=पूताऽन्तःकरणः, भुवः=पृथिव्याः, भर्तुः=पत्युः, सन्ततेः=प्रजायाः, स्तम्भकारणम्=निरोधबीजम्, अपश्यत्=ज्ञातवान्, अथ=स्तम्भकारणज्ञानान्तरम्, एनम्=अमूम् (दिलीपम), प्रत्यबोधयत्=कथितवान्।

**समासः**—भावितः आत्मा यस्य सः भावितात्मा। स्तम्भस्य कारणम् स्तम्भकारणम्, तत् स्तम्भकारणम्।

**कोशः**—"थर्ता स्वामिनि पुंसि स्यात् त्रिषु धातरि पोष्टरि" इति मेदिनी। "हेतुर्ना कारणं बीजम्" इत्यमरः।

**शब्दार्थः**—सः=उस (वसिष्ठ) ने, प्रणिधानेन=ध्यान से, भावितात्मा=पवित्रात्मा, भुवः=पृथिवी के, भर्तुः=पति की, सन्ततेः=सन्तान का, स्तम्भकारणम्=नहीं होने का कारण, अपश्यत्=देखा, अथ=कारण देख लेने के बाद, एनम्=इस (दिलीप) को, प्रतयबोधयत्=समझाया।

**हिन्दी**—पवित्रात्मा वसिष्ठ ने ध्यान से राजा दिलीप के सन्तान नहीं होने का कारण देखा और बाद में उन्हें समझाया।

**पुरा शक्रमूपस्थाय तंवोर्वी प्रति यास्यतः।**
**आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथिः।।७५।।**

**प्रसङ्गः**—वशष्ठिदिलीपयोः वार्तालापे महामुनिः वशिष्ठो दिलोपस्य पुत्रजन्मावरोधकारणं निर्दिशतीति सूचयति महाकविः कालिदासः।

**अन्वयः**—पुरा, शक्रम् उपस्थाय, उर्वीम्, प्रति, यास्यतः, तव पथि, कल्पतरुच्छायाम्, आश्रिता, सुरभिः, आसीत्।

**सञ्जीविनी**–पुरा पूर्व शक्रमिन्द्रमुपस्थाय संसेव्योर्वी प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तव पथि कल्पतरुच्छायामाश्रिता सुरभिः कामधेनुरासीत्। तत्र स्थितेत्यर्थः।

**वाच्य०**–आश्रितया सुरभ्याः, अभूयत्।

**चन्द्रिका**–पुरा=पूर्वम्, शक्रम्=इन्द्रम्, उपस्थाय=संसेव्य उर्वीम्=पृथिवीम्, प्रति=उद्दिश्य, यास्यतः=गमिष्यः, तव=दिलीपस्य, पथि=मार्गे, कल्पतरु-च्छायाम्=मन्दारस्याधस्तादातपरहितस्थानम्, आश्रिता=अवलम्लिनी, सुरभिः=कामधेनुः, आसीत्=अभूत्।

**समासः**–कल्पतरो" छाया कल्पतरुच्छाया, ताम् कलपतरुच्छायाम्।

**कोशः**–"जिष्णुर्लेरदषंभः शक्रः शतमन्युर्दिवस्पतिः", "सर्वसहा वसुमती वसुधोर्वी वसुन्धरा", "सुगन्धे च मनोज्ञे च वाच्यवत् सुरभिः स्मृतः" इति विश्नः।

**शब्दार्थः**–पुरा=पूर्वकाल में, शक्रम्=इन्द्र की, उपस्थाय=सेवा करके, उर्वीम्=पृथिवी को, प्रति=उद्देश्य कर, यास्यतः=जा रहे, तव=तुम्हारे (दिलीप के) पथि=रास्ते में, कल्पतरुच्छायाम्=कल्पवृक्ष की छाया में, आश्रिता=बैठी हुई, सुरभिः=कामधेनु, आसीत्=थी।

**हिन्दी**–पूर्वकाल में किसी समय इन्द्र के दरबार से पृथिवी पर आ रहे आपके रास्ते में कल्पवृक्ष की छाया में कामधेनु बैठी थी।

**धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन्।**
**प्रदक्षिणाक्रियार्हाय। तस्यां त्वं साधु नाचरः।।७६।।**

**प्रसङ्गः**–वशिष्ठदिलीपयोः वार्तालापे महामुनिः वशिष्ठो दिलीपस्य पुनर्जन्मावरोधकारण काधेनोरवमाननादिकं निर्दिशतीति सूचयति महाकविः कालिदासोऽत्र।

**अन्वयः**–ऋतृसनाताम्, इमाम, राज्ञीम् धर्मलोपभयात्, स्मरन्, प्रदक्षिणक्रियार्हायाम्, तस्यां त्वम्, साधु, न आचरः।

**सञ्जीविनी**–ऋतुः पुष्पम्। रज इति यावत्। "ऋतुः स्त्रीकुसुमेऽपि च" इत्यमरः। ऋतुना निमित्तेन स्नातामिमां राज्ञीं सुदक्षिणां धर्मस्यर्त्व-मिगमनलक्षणस्य लोपाद् भ्रंशाद्यत् भय तस्मात्स्मरन् ध्यायन्। "मृदं गां दैवतं विप्रं धृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन्।" इति शास्त्रात्प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्याया तस्या धेन्वा त्वं साधु प्रदक्षिणादिसत्कारं नाचरो नाचरितवानसि। व्यासक्ता हि विस्मरन्तीति भावः। ऋतुकालाभिगमने मनुः–"ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा" इति। अकरणे दोषमाह पराशरः–ऋतुस्नातां तु यो भार्या स्वस्थः सन्नोपसर्पति। बालगोध्नापराधेन विध्यते नात्र संशयः।" इति।

**वाच्य०**–स्मरता, त्वया, न आचर्यत।

**चन्द्रिका**–स्मरता, त्वया, न आचर्यत।

**चन्द्रिका**–ऋतुस्नातम्=रजोदर्शनकृतावभज्जनाम्, इमाम्=अमूम् (सुदक्षिणाम्), राज्ञीम्=महिषीम्, धर्मलोपभयात्=पुण्यध्वंसभीतेः, स्मरन्=अनुचिन्तयन्, प्रदक्षिणक्रियार्हायाम्=परिक्रमकरणयोग्यायाम्, तस्याम्=कामधेन्वाम्, त्वम्=दिलीपः. साधु=उचितम्, न=नहि, आचरः=व्यवहृतवान्।

**समासः**–ऋतुना स्नाता ऋतुस्नाता, ताम् ऋतुस्नाताम्। धर्मस्य लोपः धर्मलोपः, धर्मलोपाद्भयम् धर्मलोपभयम्, तस्मात् धर्मलोपभयात्। प्रगतं दक्षिणं प्रदक्षिणम् प्रदक्षिणस्य क्रिया प्रदक्षिक्रिया, प्रदक्षिणक्रियया अर्हा प्रदक्षिणक्रियार्हा, तस्याम् प्रदक्षिणक्रियार्हायाम्।

**कोशः**–"ऋतुः स्त्रीकुसुमेऽपि च" इत्यमरः। "ऋतुर्वर्षाऽऽदिषट्सु च। आर्तवे मासि च पुमान्" इति मेदिनी।

**शब्दार्थः**–ऋतुस्नाताम्=ऋतुस्नात्, इमाम्=इस (सुदक्षिणा), राज्ञतीम्=रानी को, धर्मलोपभयात्=धर्म का लोप हो जाने के डर से,

स्मरन्=स्मरण करता हुआ, प्रदक्षिणक्रियार्हायाम्=फेरी लगाने योग्य, तस्याम्=उस (कामधेनु) के विषय में, त्वम्=तुम (दिलीप) ने, साधु=उचित, न=नहीं, आचर:=आचरण किया।

**हिन्दी**–धर्मलोप के भय से, ऋतुस्नाता इस (सुदक्षिणा) रानी का स्मरण करते हुए, तुमने परिक्रमा करने योग्य उस (कामधेनु) के विषय में उचित व्यवहार नहीं किया।

**अवजानासि मां यस्मादतस्ते न भविष्यति।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा।।७७।।**

**प्रसङ्ग:**–वशिष्ठदिलीपयो: वार्तालापे महामुनि: वशिष्ठो दिलीपस्य पुत्रजन्मावरोधकारणं कामधेनोरवमाननाफलस्वरूपं दिलीपाय पुत्ररहितत्व शाप निर्दिशतीति सूचयति महाकवि: कालिदासोऽत्र।

**अन्वय:**–यस्मात्, माम्, अवजानासि, अत: मत्प्रसूतिम्, अनाराध्य, ते, प्रजा, न, भविष्यति, इति, सा, त्वाम्, शशाप।

**सञ्जीविनी**–यस्मात्कारणान्मामवजानासि तिरस्करोषि अत: कारणान्मत्प्रसूतिं मम सन्ततिमनाराध्यासेवयित्वा ते तब प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप। "शप आक्रोशे"।

**वाच्य०**–यस्मात्, त्वया, अहम्,अवज्ञाये, प्रजया, न भविष्यये, इति, तया, त्वम्, शेपिषे।

**चन्द्रिका**–यस्मात्=हेतो:, माम्=सुरभिम्, अवजानासि=तिरस्करोषि, अत:=अस्माद्धेतो:, मत्प्रसूतिम्=मम सन्ततिम्, नन्दिनीमित्यर्थ:। अनाराध्य= असंसेव्य, ते=तव (दिलीपस्य), प्रजा=सन्तति: न=नहि, भविष्यति=उत्पत्स्यते, इति=एवम्, सा=सुरभि:, त्वाम्=दिलीपम, शशाप=शापं ददौ।

**समास:**–मम प्रसूति:, मत्प्रसूति: ताम् मत्प्रसूतिम्। न आराध्य अनाराध्य।

**कोश:**–"प्रसूतिरुद्भवेऽपि स्यात्तनये दुहितर्यपि" इति मेदिनी।

**शब्दार्थ:**–यस्मात्=जिस लिये, माम्=मुझ (कामधेनु) को, अवजानासि=अपमान करते हो, अत:=इसलिये, मत्प्रसूतिम्=मेरी (कामधेनु) की सन्तान की, अनाराध्य=आराधना के बिना, ते=तुम (दिलीप) को, प्रजा=सन्तान, न=नहीं, भविष्यति=होगी, इति=इस प्रकार, सा=उस (कामधेनु) ने, त्वाम्=तुम (दिलीप) को, शशाप=शाप दिया।

**हिन्दी**–"जिस लिए तुम मेरा अपमान करते हो, इसलिये मेरी सन्तान की सेवा के बिना तुमको सन्तान नहीं होगी।" इस प्रकार उसने तुमको शाप दिया।

कथं तदस्माभिर्न श्रुतमित्याह–

**स शापो न त्वया राजन्न च सारथिना श्रुत:।**
**नदत्याकाशगङ्गाया स्रोतस्युद्दामदिग्गजे।।७८।।**

**प्रसङ्ग:**–वशिष्ठदिलीपयो: वार्तालापे महामुनि: वशिष्ठो दिलीपस्य पुत्रजन्मावरोधकारणं निर्दिशतीति सूचयाते महाकवि: कालिदासोऽत्र।

**अन्वय:**–हे राजन्, स:, शाप:, त्वया, न, श्रुत:, सारथिना, च, न, उद्याम दिग्गजे, आकाशगङ्गाया:, स्रोतसि, नदति।

**सञ्जीविनी**–हे राजन्! स शापस्त्वया न श्रुत:। सारथिना च न अश्रवणे हेतुमाह–क्रीडार्थमागता उद्दामानो दाम्न उद्गता दिग्गजा यस्मिंस्तथोक्ते, आकाशगङ्गाया: मन्दाकिन्या:, स्रोतसि प्रवाहे, नदति सति।

**वाच्य०**–हे राजन्, शापम्, त्वम्, न श्रुतवान्, सारथि:, च, न, "श्रुतवान्"।

**चन्द्रिका**–हे राजन्=हे नृप (हे दिलीप), स:=उक्त:, शाप:=दुर्वाक्यम्, त्वया=भवता (दिलीपेन), न=नहिं, श्रुत:=आकर्णित:, सारथिना=सूतेन, च=पुन:, "श्रुत:" इत्यावर्त्यते। उद्दामदिग्गजे=शृंखलामुक्ताशाहस्तिनि, आकाशगङ्गाया:=मन्दाकिन्या:, स्रोतसि=प्रवाहे, नदति=शब्दं कुर्वति। "सति" इति शेष:।

**समासः**–दाम्नः उद्गताः उद्दामानः, दिशां गजाः दिग्गजाः, उद्दामानः दिग्गजाः यत्र तत् उद्दामदिग्गजम्, तस्मिन् उद्दामदिग्गजे। अकाशस्य गङ्गा आकाशगङ्गा, तस्याः आकाशगङ्गायाः।

**कोशः**–"नियन्ता प्राजिता यन्ता सूतः क्षता च सारथिः। सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः" इत्यमरः।

**शब्दार्थः**–हे राजन्, सः=वह, शापः=शाप, त्वया=तुम (दिलीप) से, न=नहीं, श्रुतः=सुना गया, सारथिना=सारथी से, च=भी, न=नहीं, उद्दामदिग्गजे=बन्धनमुक्ति दिग्गजों वाली, आकाशगङ्गायाः=आकाशगङ्गा की, स्रोतसि=प्रवाह को. नदति=शब्द करते हुए।

**हिन्दी**–हे राजन्, आपने और न आपके सारथी ने उस शाप को सुना, क्योंकि बन्धनमुक्त दिग्गजों वाला आकाशगङ्गा का प्रवाह कलकल शब्द कर रहा था।

**ईप्सितं तदवशानाद्विद्धि सार्गलमात्मनः।**
**प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः।।७९।।**

**प्रसङ्गः**–वशिष्ठदिलीपयोः वार्तालापे महामुनिः वशिष्ठो दिलीपस्य पुत्रजन्ममावरोधकारणं कामधेनोरवमाननादिकं निर्दिशतीति सूचयत्यत्र महाकविः कालिदासः।

**अन्वयः**–तदवज्ञानात्, आत्मनः, ईप्सितम्, सार्गलम्, विद्धि. हि, पूज्यपूजाव्यतिक्रमः, श्रेय, प्रतिबध्नाति।

**सञ्जीविनी**–तदवज्ञानातस्या धेनोरज्ञानादपमानादात्मनः स्वस्याप्तुमिष्ट-मीप्सितं मनोरथम्। आप्नोतेः सन्नन्तात्क्तः ईकारश्च। सार्गलं सप्रतिबन्धं विद्धि जानीहि। तथा हि पृज्यपूजाया व्यतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नति।

**वाच्य॰**–'त्वया विद्यताम पूज्यपूजाव्र्रतिक्रामेण श्रेयः प्रतिबध्यते।

**चन्द्रिका**–तदवज्ञानात्=सुरभ्यपमानात्, आत्मनः=स्वस्य (दिलीपस्य)

ईप्सितम्=अभिलषितम, पुत्रमिति भाव:। सार्गलम्=सावरोधम्, विद्धि=अवेहि, हि=यत:, पूज्यपूजाव्यतिक्रम:=अर्च्यार्चाऽकरणम्, श्रेय:=कल्याणम्, प्रतिबध्नाति=रुणद्धि।

**समास:**–तस्या: अवज्ञानं तदवज्ञानम्, तस्मात् तदवज्ञानात्। अर्गलया सहितं सार्गलम् तत् सार्गलम्। पूज्यानां पूजा पूज्यपूजा पूज्यपूजाया: व्यतिक्रम: पूज्यपूजाव्यतिक्रम:।

**कोश:**–"अनादर: परिभव: परीभावस्तिरस्क्रिया। रीढाऽवमानना-ऽवज्ञाऽवहेलनमसूर्क्षणम्" इत्यमर:।

**शब्दार्थ:**–तदवज्ञानात्=उस (कामधेनु) के अपमान से, आत्मन:= अपना, ईप्सितम्=इच्छित, सार्गलम्=सावरोध, विद्धि=समझो, हि=जिस लिये कि, पूज्यपूजाव्यतिक्रम:=पूज्य की पूजा न करना, श्रेय:=कल्याण को प्रतिबध्नाति=रोकता है।

**हिन्दी**–कामधेनु के अपमान से अपने अभिलषित को रुका हुआ समझिये, क्योंकि पूजनीय की पूजा न करना कल्याण को रोकता है।

**हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतस:।**

**भुजङ्गपिहितद्वारं पातालमधितिष्ठति।।८०।।**

**प्रसङ्ग:**–वशिष्ठदिलीपयो: वार्तालापे महामुनि: वशिष्ठो दिलीपपुत्र-जन्मावरोधकशापप्रदायित्र्या: सुरभे: पाताललोकावस्थानं तस्याश्च प्रयोजनं निर्दिशतीति सूचयत्यत्र महाकवि: कालिदास:।

**अन्वय:**–सा, च, इदानीम्, दीर्घसत्रस्य, प्रचेतस:, हविषे, भुजङ्गपिहित-द्वारम्, पातालम्, अधितिष्ठति।

**सञ्जीविनी**–सा च सुरभिरिदानीं दीर्घसत्रं चिरकालसाध्यो यागविशेषो यस्य तस्य प्रचेतसो हविषे दध्याज्यादिहविरर्थं भुजङ्गपिहितद्वारं भुजङ्गावरुद्धद्वार

ततो दष्प्रवेशं पातालमधितिष्ठति। पाताले तिष्ठतीत्यर्थः। "अधिशीङ्स्थासां कर्म" इति कर्मत्वम्।

**वाच्य०**–तया, अधिष्टीयते।

**चन्द्रिका**–सा=कामधेनुः, च=पुनः, इदानीम्=अस्मिन् समये, दीर्घसत्रस्य=चिरकालसाध्ययागवतः, प्रचेतसः=वरुणस्य, हविषे=सर्पिराद्यर्थम्, भुजङ्गपिहितद्वारम्=सर्पाऽवरुद्धप्रतीहारम्, पातालम्=रसातलम्, अधितिष्ट=अध्यास्ते।

**समासः**–दीर्घ सत्रं यस्य सः दीर्घसत्रः, तस्य दीर्घसत्रस्य। भुजङ्गपिहितमं भुजङ्गपिहितम्, भुजङ्गपिहितं द्वारं यस्य तत् भुजङ्गपिहितद्वारम्, तत् भुजङ्गपिहितद्वारम्।

**कोशः**–"सर्प पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः" इत्यमरः। "हविर्होतव्यमात्रे ससर्पिष्यपि नपुंसकम्," सत्रं यज्ञे सदादानाच्छादनारण्यकैतवे" इति चे मेदिनी।

**शब्दार्थः**–सा=वह (कामधेनु), च=और, इदानीम्=इस समय दीर्घसत्रस्य=बहुत दिन साध्य करनेवाले, प्रचेतसः=वरुण के, हविषे=धृदित के लिये, भुजङ्गपिहितद्वारम्=सर्पों से घिरे दरवाजों वाले, पातालम्=पाताल में, अधितिष्ठति=रह रही है।

**हिन्दी**–और इस समय वह, बहुत दिनों तक यज्ञ करने वाले वरुण के हवि के लिये, सर्पों से घिरे दरवाजों वाले पाताल में रहती है।

तर्हि का गतिरित्यत आह–

**सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः।**
**आराधय सपत्नीकः प्रीता कामदुधा हि सा।।८१।।**

**प्रसङ्गः**–वशिष्ट दिलीपयोः वार्तालापे महामुनिः वशिष्ठो दिलीपपुत्रजन्मावरोधकनाशकियाः नन्दिन्या अर्चनादिकं कर्तुं सपत्नीकं दिलीपं निर्दिशतीति सूचयति महाकविः कालिदासोऽत्र।

**अन्वयः**–तदीयाम्, सुताम्, सुरभेः, प्रतिनिधिम्, कृत्वा, शुचिः सपत्नीकः, आराधय, हि, सा, प्रीता. कामदुधा।

**सञ्जीविनी**–तस्याः सुरभेरियं तदीयाः, तां सुतां सुरभेः प्रतिनिधिं कृत्वाशुचिः शुद्धः। सह पत्न्या वर्तते इति सपत्नीकः सन्। "तद्यृतश्च" इति कप्प्रत्ययः। आराधय। हि यस्मात्कारणात्सा प्रीता तुष्टा सती। कामान्दोग्धीति कामदुधा भवति। "दुहः कब्धश्च" इति कप्प्रन्ययः घादेशश्च।

**वाच्य०**–तदीया सुता सुरभेः प्रतिनिधः, शुचिना पत्नीकेन "त्वया" आराध्यताम्, तया प्रीतया कामदुघया "भूयते"।

**चन्द्रिका**–तदीयाम्=सौरभेयीम्, सुताम्=पुत्रीम्, "नन्दिनीम्" इत्यर्थः। सुरभेः=कामधेनोः, प्रतिनिधिम्=स्थानापन्नाम् कृत्वा=विधाय, शुचिः=पवित्रः, सपत्नीकः=भार्याविशिष्टः, आराधय=उपासनाङ्कुरु, हि=यतः, सा=सौरभेयी, प्रीता=तुष्टा, "सती" इति शेषः। कामदुघा=अभीष्टफलदा, "भवति" इति शेषः।

**कोशः**–"शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमंत्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु" इति मेदिनी।

**शब्दार्थः**–तदीयाम्=सुरभि की, सुताम्=लड़की (नन्दिनी को) को सुरभेः=सुरभि का, प्रतिनिधिम्=स्थानापन्न, कृत्वा=करके, शुचिः=पवित्र (होकर), सपत्नीकः=स्त्री के साथ, आराधय सेवा=करो, हि=क्योंकि, सा=वह (नन्दिनी), प्रीता=प्रसन्न (होकर), कामदुघा=कामना की पूर्ति करती है।

**इतिवादिन एवास्य होतुराहुतिसाधनम्।**
**अनिन्द्या नन्दिनी नाम धेनुराववृते वनात्॥८२॥**

**प्रसङ्गः**–श्लेकेऽस्मिन् वशिष्ठदिलीपयोः वार्तालापे वशिष्ठस्य नन्दिनी नामोच्चारणादेव तत्र नन्दिन्या उपस्थितिं सूचयति महाकविः कालिदासः।

**अन्वय**–इति, वादिनः, एव, होतुः, अस्य, आहुतिसाधनम् नन्दिनीं, नाम, अनिन्द्या, धेनुः, वनात्, आववृते।

**सञ्जीविनी**–इति वादिनी वदत एव होतुर्हवनशीलस्य। "तृन्" इति तृत्प्रत्ययः। अस्य मुनेराहुतीनां साधनं कारणम्। नन्दयतीति व्युत्पत्त्या नन्दिनी नामानिन्द्यागर्ह्या प्रशस्ता धेनुर्वनादाववृते प्रत्यागता। "अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्" इति भावः।

**वाच्य०**–आहुतिसाधनेन, नन्दिन्या, अनिन्द्यया, धेन्वा, वनात्, आववृते।

**चन्द्रिका**–इति=एवम्, वादिनः=वदतः, एव=इति समाप्तौ, होतुः=यज्वनः, अस्य=वसिष्ठस्य, आहुतिसाधनम्=हवनहेतुः, नन्दिनी=सौरभेयी, नाम=इति प्रसिद्धौ, अनिन्द्या=प्रशंसनीया, धेनुः=सकृत्प्रसूता गौः, वनात्=आरण्यात्, आववृते=आगता।

**समासः**–आहुतीनाम् साधनम् आहुतिसाधनम्। न निन्द्या अनिन्द्या।

**कोशः**–"इति स्वरूपे सान्निध्ये विवक्षानियममेऽपि च। हेतौ प्रकारप्रत्यक्षप्रकर्षेष्ववधारणे। एवमर्थे समाप्तौ स्यात्" इति हैमः। "एवौपम्येऽवधारणे" इति विश्वः।

**शब्दार्थः**–इति=इस प्रकार, वादिनः=कहते हुए, एव=ही, होतुः=होम करने वाले, अस्य=इस (वसिष्ठ) के, आहुतिसाधनम्=आहुति का कारण, नन्दिनी=कामधेनु की पुत्री, नाम="नन्दिनी" नाम से प्रसिद्ध, अनिन्द्या=प्रशंसा के योग्य, धेनुः=गाय, वनात्=वन से, आववृते=आ गयी।

**हिन्दी**–इस प्रकार कहते हुए ही याज्ञिक वसिष्ठ की घृत आदि आहुति के कारण नन्दिनी नाम की प्रशंसा योग्य गाय वन से आ गयी।

संप्रति धेनुं विशिनष्टि–

**ललाटोदयमाभुग्नं पल्लवस्निग्धपाटल।**
**बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम्।।८३।।**

**प्रसङ्गः**–श्लोकेऽस्मिन् महाकवि "कालिदासो वशिष्ठस्य धेनो" नन्दिन्याः वर्णनं कुर्वन् तस्याः सन्ध्यया सह तुलनां करोति–

**अन्वयः**–पल्लवस्निग्धपाटला, ललाटोदयम्, आभुग्नम्, श्वेतरोमाङ्कम्, बिभ्रती, नवम्, शशिनम्, सन्ध्या इव।

**सञ्जीविनी**–पल्लववत्स्निग्धा चासौ पाटला च। संध्यायामप्येतद्विशेषणं योज्यम्। ललाट उदयो यस्य स ललाटोदयः। तमाभुग्नभीषद्वक्रम्। "आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि" इत्यमरः। "ओदितश्च" इति निष्ठा तस्य नत्वम्। श्वेतरोमाण्येवाङ्कस्तं बिभ्रती। नवं शशिनं बिभ्रती संध्येव स्थिता।

**वाच्य०**–"पल्लवस्निग्धपाटलया, बिभ्रत्या, सन्ध्या, इव, "स्थितया" वनात्, "आबवृते"।

**चन्द्रिका**–पल्लवस्निग्धपाटला=किसलयचिक्कणश्वेतरक्ता, ललाटोदयम् =भालोद्भूतम्, आभुग्नम् ईषद्वक्रम्, श्वेतरोमाङ्कम्=शुभ्रलोमचिह्न, बिभ्रति= धरयन्ती, नवम्=नवीनम्, शशिनम्=चन्द्रमसम्, सन्ध्या=सायम् इव=यथा, "स्थिता" इति शेषः।

**समासः**–स्निग्धा चासौ पाटला स्निग्धपाटला, पल्लववत् स्निग्धपाटला पल्लवस्निग्धपाटला। ललाटे उदयो यस्य सः ललाटोदयः, तम् ललाटोदयम्। आ ईषत् भुग्नः आभुग्नः तम आभुग्नम्। श्वेतानि च तानि रोमाणि श्वेतरोमाणि श्वेरोमाणि एव अङ्कः, श्वेरोमाङ्क, तं श्वेतरोमाङ्कम्।

**कोशः**–"पल्लवोऽस्त्री किसलयम्", "चिक्कणं मसृणं स्निग्धम्", "श्वेतरक्तस्तु पाटलः", आविद्धम् कुटिलं भुग्नं केल्लितं वक्रमित्यपि", शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डुराः। अवदातः सितो गौरी वलक्षो धवलोऽर्जुनः" इति चामरः।

**शब्दार्थः**–पल्लवस्निग्धपाटला=किसलय के समान चिकनी और श्वेत तथा रक्त रूपों वाली, ललाटोदयम्=माथे पर उगे हुए, आभुग्नम्=कुछ टेढ़ा, श्वेतरोमाङ्कम्=सफेद रोओं के चिन्ह को, बिभ्रती=धारण किये हुए, नवम्=नये (द्वितीया तिथी के), शशिनम्=चन्द्रमा को, (धारण किये हुए) सन्ध्या= सान्ध्याकाल, इव=समान, (थी)।

हिन्दी–माथे पर उगे कुछ टेढ़े, सफेद रोओं को धारण किये हुए द्वितीया के चन्द्रमा को धारण किये हुए, किसलय के समान चिकनी और श्वेत तथा रक्त रूपों वाली सन्ध्या की तरह नन्दिनी थी।

**भुवं कोष्णेन कुण्डोघ्नी मेध्येनावभृथादपि।**
**प्रसन्वेनाभिवर्षन्ती वत्सालोकप्रवर्तिना।।८४।।**

**प्रसङ्गः**–श्लोकऽस्मिन् महाकविः कालिदासो वशिष्ठस्य धेनोः नन्दिया. वर्णनं करोति–

**अन्वयः**–कोष्णेन, अवभृथाद्, अपि, मेध्येन, वत्साऽऽलोकप्रवर्तिना, प्रस्नवेन, भुवम, अभिवर्षन्ती, कुण्डोध्नी।

**सञ्जीविनी**–कोष्णेन किंचिदुष्णेन। "कवं चोष्णे" इति चकारात्कादेशः। अवभृथादप्यवभृथस्नानादपि मेध्येन पवित्रेण, "पुतं पवित्रं मेध्यं च" इत्यमरः। वत्सस्यालोकेन प्रदर्शनेने प्रवर्तिना प्रवहता प्रस्नवेन क्षीराभिस्यन्दनेने भुवमसिञ्चन्ती। कुण्डमिवोध आपीनं यस्याः सा कुण्डोध्नी। "ऊधस्तु क्लीबमापीनम्" इत्यमरः। "ऊधसोऽनङ्" इत्यनङ्ादेशः। "बहुब्रीहेरूधसो ङीष्" इति ङीष्।

**वाच्य०**–अभिवर्षन्त्या, कुण्डोध्न्या, वनात् आववृते।

**चन्द्रिका**–कोष्णेन=किञ्चिदुष्णेन, अवभृथात्=दीक्षान्तस्नानाम्, अपिः समुच्चये, स्वयम्पूतोऽपि स्नानात्पुनः पूत इति भावः। मध्येन–पूतेन, वत्साऽऽलोकप्रवर्तिना=शकृत्करिदर्शनप्रवहता, प्रस्नवेन=स्यन्दनेन, भुवम्= पृथिवीम्, अभिवर्षन्ती=सिञ्चन्ती, कुण्डोध्नी=उरवापीनवती, "आववृते"।

**समासः**–ईषत् उष्णाम् कोष्णम्, तेन कोष्णेन। वत्सस्य आलोकः वत्सालोकः वत्सालोकेन प्रवर्ती वत्सालोकप्रवर्ती, तेन वत्सालोकप्रवर्तिना। कुण्डम् इव ऊधो यस्या" सा कुण्डोध्नी।

**कोशः**–"कोष्णं कवोष्णं मन्दोष्णम्", "दिक्षाऽन्तोऽवभृथो यज्ञ", "पूतं

पवित्रं मेध्यञ्च", शकृत्करिस्तु वत्सः स्यात्", "पिठरः स्थाल्युखा कुण्डम्", "ऊधस्तु क्लीबमापीनम्" इति चामरः।

**शब्दार्थः**—कोष्णेन=थोड़ा गरम, अवभृथात्=दीक्षा के अन्त में स्नान से, अपि=भी, मेध्येन=पवित्र, वत्साऽऽलोकप्रवर्तिना=बछड़े को देखकर निकलने वाले, प्रस्नवेन=धार से, भुवम्=पृथिवी को, अभिवर्षन्ती=सींचते हुए, कुण्डोध्नी=कुण्ड के समान स्तन वाली।

**हिन्दी**—थोड़ा सा गरम, दीक्षान्त स्नान से भी पवित्र बछड़े को देखकर निकलने वाली दूध की धार से जमीन को सींचते हुए कुण्ड की तरह स्तन वाली वन से लौटी।

**रजःकाणैः खुराद्धूतैः स्पृद्भिर्गात्रमन्तिकात्।**
**तीर्थाभिषेकजां शुद्धिमादधाना महोक्षितः।।८५।।**

**प्रसङ्गः**—श्लोकेऽस्मिन् महाकविः कालिदासो दिलीपस्य मनोरथसफल, सूचयित्र्याः नन्दिन्याः वर्णनं करोति—

**अन्वयः**—खुरोद्धुतैः, अन्तिकात्, गात्रम्, स्पृशद्भि, रजःकणैः, महीक्षितः", तीर्थाऽभिषेकजान् शुद्धिम आदधाना।

**सञ्जीविनी**—खुरोद्धूतैरन्तिकात् समीपे गात्र स्पृशद्भिः। "दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारात्पञ्चमी। रजसां कणैः महीं क्षियत इष्ट इति महीक्षित् तीर्थाभिषेकेण जातां तोर्थाभिषेकजाम्। बुद्धिमादधाना कुर्वाणा। एतेन वायव्यं स्नानमुक्तम्। उक्तं च मनुना—"आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम्। आपोहिष्ठेति च ब्राह्यं वायव्यं गोरजः स्मृतम्।।" इति।

**वाच्य०**—आदधानया 'नन्दिन्या" बनात्, आववृते।

**चन्द्रिका**—खुरोद्धूतैः=शफोत्थितैः, अन्तिकात्=समीपे, गात्रम् शरीरम्, स्पृशद्भिः=स्पर्श कुर्वद्भिः, रणः कणैः=धूलिलवैः, महीक्षितः=राज्ञः, (दिलीपस्य तीर्थाऽभिषेकजाम्= प्रयागादिस्नानजनिताम् यज्ञीयजलभाजनजनितां वा, शुद्धिम् पवित्रताम्, आदधाना=कुर्वाणा)।

**समास:**–खुरैरुद्धूता:, खूरोद्धूता:, तै: खुरोद्धूतै:। रजसाम् कणा: रज:कण:, तै: रज:कणै:। तीर्थस्य अभिषेक: तीर्थाऽभिषेक:, तीर्थाभिषेकात् जाता तीर्थाभिषेकजा, ताम् तीर्थाभिषेकजाम्।

**कोश:**–"शफं क्लीबे खुर: पुमान्", "रेणुर्द्वयो: स्त्रियां धूलि: पांसुर्ना न द्वयो: रज:" "लवलेशकणाणव:" इति चामर:।

**शब्दार्थ:**–खुरौद्धू, तै:=खुरों से उड़ाये गये, अन्तिकात्=समीप से, गात्रम्=शरीर को, स्पृशद्भि:=स्पर्श करते हुए, रज:कणै:=रजकणों से, महीक्षित:=राजा दिलीप की, तीर्थाऽभिषेकजाम्=यज्ञ के जल के मार्जन से होने वाली, शुद्धिम्=पवित्रता को, आदधाना=करते हुए।

**हिन्दी**–खुरों से उड़ाये गये, समीप में शरीर को स्पर्श करते हुए रजकणों से राजा दिलीप की यज्ञीय जल के अभिषेक से होने वाली पवित्रता को करते हुए।

**तां पुण्यदर्शना दृष्ट्वा निमित्तज्ञस्तपोनिधि:।**
**याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत्।।८६।।**

**प्रसङ्ग:**–सम्प्रति महाकवि: कालिदास: पुन: वशिष्ठदिलीपयोर्वार्तालापवर्णनं करोति।

**अन्वय:**–निमित्तज्ञ: तपोनिधि: पुण्यदर्शनाम्, दृष्ट्वा, आशंसिताऽ-वन्ध्यप्रार्थनम्!, याज्यम् पुन:, अब्रवीत्।

**सञ्जीविनी**–निमित्तज्ञ: शकुनज्ञस्तपोनिधिर्वसिष्ठ: पुण्यं दर्शनं सफलं तस्यास्तां धेनुं दृष्ट्वा आशंसितं मनोरथ:। नपुंसके भावे क्त:। तत्रावन्ध्यं सफलं प्रार्थनं यस्य स तम्। अवन्ध्यमनोरथमित्यर्थ: याजयितुं योग्यं याज्य पार्थिवं पुनरब्रवीत्।

**वाच्य०**–निमित्तज्ञेन, तपोनिधिना, आशंसितावन्ध्यप्रार्थन:, याज्य:, पुन:, औच्यत।

**चन्द्रिका**–निमित्तज्ञ:=शकुनवित्, तपोनिधि:=चान्द्रायणाद्याकर:, पुण्यदर्शनाम्=धर्माऽवलोकनाम्, ताम्=नन्दिनीम्, दृष्ट्वा=अवलोक्य, आशंसिताऽवन्ध्यप्रार्थनम्= सफलमनोरथम्, याष्यम्=ऋतुङ्कारियितुं योग्यम् पुन:=भूय:, अब्रवीत्=अगादीत्।

**समास:**–तपसां निधि: तपोनिधि:। पुण्यं दर्शनं यस्या: सा पुण्यदर्शना, ताम् पुण्यदर्शनाम्। न बन्ध्यम् अवन्ध्यम्, अवन्ध्यञ्च तत्प्रार्थनम् अवन्ध्यप्रार्थनम्, आशंसिते अवन्ध्यप्रार्थनं यस्य स: आशंसिताऽवन्ध्यप्रार्थन:, तम् आशंसितावन्ध्यप्रार्थनम्।

**कोश:**–"निमित्तं हेतुलक्ष्मणो:", "तपश्चान्द्रायणादौ स्याद्धर्मे लोकान्तरेऽपि च", पुण्यं मनोज्ञेऽभिहित तथा सुकृतधर्मयो:" इति च विश्व:।

**शब्दार्थ:**–निमित्तज्ञ:=शकुन जानने वाले, तपोनिधि:=तपोनिधि (वसिष्ठ) ने, पुण्यदर्शनाम्=दर्शन करने पर पुण्य देने वाली, ताम्=उस (नन्दिनी) को, दृष्ट्वा=देखकर, आशंसिताऽवन्ध्यप्रार्थनम्।=सफल मनोरथ, याज्यम्=यजमान को, पुन:=फिर, अब्रवीत्=कहा।

**हिन्दी**–शकुन जानने वाले तपोनिधि वसिष्ठ ने दर्शन से पुण्य देने वाली उस नन्दिनी को देखकर सफल मनोरथ यजमान राजा दिलीप को फिर कहा।

**अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मन:।**
**उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत्।।८७।।**

**प्रसङ्ग:**–श्लोकेऽस्मिन् वशिष्ठदिलीपयो: वार्तालापयो: वार्तालापे महाकवि: कालिदास: दिलीपाय मनोरथ साधकसूचकं वशिष्ठकथनं निर्दिशति।

**अन्वय:**–हे राजन्, आत्मन:, सिद्धिम, अदूरवर्तिनीम्, विगणय, यत् कल्याणी, इयम्, नाम्नि, कीर्तिते, व, उपस्थिता।

**सञ्जीविनी**–हे राजन्! आत्मन: कार्यस्य सिद्धिमदूरवर्तिनीं शीघ्रभाविनी

विगणय विद्धि। यद्यस्मात्कारणात्कल्याणी मङ्गलमूर्तिः। "बह्वादिभ्यश्च" इति ङीष्। इयं धेनुर्नाम्नि कीर्तिते कथिते सत्येवोपस्थिता।

**वाच्य०**—त्वया, आत्मनः सिद्धिः, अदूरवर्तिनी, विगण्यताम्, यत्, अनया, कल्याण्या, उपस्थितया, अभूयत।

**चन्द्रिका**—हे राजन्=हे नृप, आत्मनः=स्वस्य, सिद्धम्=फलनिष्पत्तिम्, अदूरवर्तिनीम्=शीघ्रभाविनीम्, विगणय=जानीहिं, यत्=यतः, कल्याणी=क्षेमङ्करी, इयम्=समीपवर्तिनी, धेनुः=सकृत्प्रसूता गौः, "नन्दिनी" इति भावः। नाम्नि=अभिधाने, कीर्तिते=उच्चारिते, एव=समाप्तौ, उच्चारणसमाप्तौ सद्य एवेति भावः। उपस्थिता=आगता।

**समासः**—न दूरम् अदूरम्, तस्मिन् अदूरे अदूरे वर्तिनी अदूरवर्तिनी, ताम् अदूरवर्तिनीम्।

**कोशः**—"राज्ञि राट् पार्थिवक्ष्माभृन्नृपमहीक्षितः", यत्तद्यतस्तौ हेतौ", "आख्याऽऽह्वे अभिधानञ्च नामधेयञ्च नाम च" इति चामरः।

**शब्दार्थः**—हे राजन्=हे पार्थिव! आत्मनः=अपनी, सिद्धिम्=सिद्धि, अदूरवर्तिनीम्=शीघ्र होने वाली, विगणय=जानो, यत्=जिस लिए, कल्याणी=कल्याण करने वाली, इयम्=यह (नन्दिनी), नाम्नि=नाम, कीर्तिते=लेते, एव=ही, उपस्थित=आ गयी।

**हिन्दी**—हे राजन्, अपनी सिद्धि जल्दी होने वाली समझो, क्योंकि कल्याण करने वाली यह गाय (नन्दिनी) नाम लेते ही आ गयी।

**वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम्।**
**विद्यामभ्यसनेनेव प्रसादयितुमर्हसि।।८८।।**

**प्रसङ्गः**—वशिष्ठदिलीपयो वार्तालापे महामुनिः वशिष्टः नन्दिनी कथं प्रसन्ना भवेदिति दिलीपायोपायं निर्दिशतीति सूचयति महाकविः कालिदासोऽत्र।

**अन्वयः**–वन्यवृत्ति (सन्), इमाम्, गाम्, शश्वत्, आत्माऽनुगमनेन, अभ्यसनेन, विद्याम्, इव, प्रसादयितुम्, अर्हसि।

**सञ्जीविनी**–वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः सन्। इमां गां शश्वत्सदा आ प्रसादादविच्छेदेनेत्यर्थः। आत्मनस्तव कर्तु अनुगमनेनानुसरणेन। अभ्यसनेनानुष्ठातुरभ्यासेन विद्यामिव। प्रसादयितुं प्रसन्नां कर्तुमर्हसि।

**वाच्य०**–वन्यवृत्तिना "सता" इयम् गौः प्रसादयितुम् अर्ह्यते।

**चन्द्रिका**–वन्यवृत्तेः=कन्दमूलाद्याहारः (सन्) इमाम्=निकटस्थाम्, गाम्=धेनुम, नन्दिनीमित्यर्थः। शश्वत्=मुहुः, आत्माऽनुगमनेन=स्व (दिलीप) कर्तृकाऽनुसरणेन, अभ्यसनेन=मुहुः पठनेन, विद्याम्=शास्त्रम्, इव=यथा, प्रसादयितुम्=प्रसन्नङ्कर्तुम्, अर्हसि=योग्योऽसि।

**समासः**–वन्यं वृत्तिः यस्य स वन्यवृत्तिः। आत्मनः अनुगमनम् आत्माऽनुगमनम्, तेन आत्माऽनुगमनेन।

**कोशः**–"मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः "आत्माचित्ते धृतौ यत्ने धिषणायां कलेवरे। परमात्मनि जीवेऽर्के हुताशनसमीरयो।। स्वभावे" इत्यत्रेकार्थसंग्रहः।

**शब्दार्थः**–वन्यवृतिः कन्दमूल आदि खाकर, इमाम् इस (नन्दिनीं) गाम्=गाय का, शश्वत्=बराबर, आत्माऽनुगमनेन=अपने को गाय का अनुसरण करने से, अभ्यसनेने=अभ्यास से, विद्याम्=विद्या के, इव=समान, प्रसादयितुम्=प्रसन्न करने के लिए, अर्हसि=योग्य हो।

**हिन्दी**–अभ्यास से विद्या के समान, जङ्गली कन्दमूल खाकर निरन्तर अनुसरण से इस गाय को प्रसन्न करने योग्य हो।

गोरनुसरणप्रकारमाह–

**प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः।**
**निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः।।८९।।**

**प्रसङ्गः**–सम्प्रति वशिष्ठदिलीपयोर्वार्तालापे महामुनि वशिष्ठ दिलीपाय गोरनुसरणप्रकारं निर्दिशतीति सूचयति महाकविः कालिदासः।

**अन्वयः**–अस्याम्, प्रस्थितायाम, प्रतिष्ठेथाः, स्थितायाम्, स्थितिम्, आचरेः निषण्णायाम्, निषीद, पीताम्भसि, अपः, पिबेः।

**सञ्जीविनी**–अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि। "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्। स्थितायां निवृत्तगतिकायां स्थितिमाचरेः स्थितिं कुरु। तिश्ठेत्यर्थः। निषण्णायामुपविष्ठां निषीदोपविश। विध्यर्थे लोट्। पीताम्भसि सत्यामपः पिबेः पिबे।

**वाच्यः**–त्वया" प्रतिष्ठीयेत, स्थितिः आचर्येत, निषद्यताम् आपः पीयेरन्।

**चन्द्रिका**–अस्याम्=सन्निकृष्टायाम् (नन्दिन्याम्), प्रस्थितायाम् प्रचलितायाम्, प्रतिष्ठेथाः=प्रचल, स्थितायाम्=निवृत्तगतिकायाम्, स्थितिम्= निवृत्तगतिम आचरेः, कुरु, निषण्णाम्=उपविष्टायाम्, निषीद=उपविश, पीताम्भसि=गृहीतजलायाम्, अपः=जलानि, पिबेः=गृहाण।

**कोशः**–"अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्।" "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्।।" इति चामरः।

**शब्दार्थः**–अस्याम्=इस (नन्दिनी) के, प्रस्थितायाम् चलने पर, प्रतिष्ठेथाः=चलो, स्थितायाम्=रुकने पर, स्थितिम्=खड़े, आचरेः=हो जाओ, निषण्णायाम्=बैठने पर, निषीद=बैठो, पीताम्भसि=पानी पीने पर, अपः=पानी, पिबेः=पीओ।

**हिन्दी**–इस (नन्दिनी) के चलने पर चलो, रुकने पर रुको, बैठने पर बैठो और पानी पीने पर पानी पियो।

**वधूर्भक्तिमती चैनामर्चितामातपोवनात्।**
**प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजदपि।।९०।।**

**प्रसङ्गः**–वशिष्ठदिलीपयोः वार्तालापे महामुनिः वशिष्ठो दिलीपं प्रति सुदक्षिणयाः नन्दिनीसेवाविषयककर्त्तव्यं निर्दिशतीति सूचयति महाकविः कालिदासोऽत्र।

**अन्वयः**–वधूः, च, भक्तिमती, प्रयता, अर्चिताम्, प्रातः आतपोवनात् अन्वेतु, सायम्, अपि, प्रत्युद्व्रजेत्।

**सञ्जीविनी**–वधूर्जाया च भक्तिमती प्रयता सती गन्धादिभिरर्चितामेनां प्रातरातपोवनात्। आङ्मर्यादायाम्। पदद्वयं चैतत्। अन्वेत्वनुगच्छतु। सायमपि प्रत्युद्व्रजेत् प्रत्युद्गच्छत। विध्यर्थे लिङ्।

**वाच्य०**–वध्वा भक्तिमत्या, प्रयतया, "सत्या" अर्चिता, एषा, प्रातः, अन्वीयताम्, प्रत्युद्व्रज्येत।

**चन्द्रिका**–वधू=स्नुषा, च=पुनः, भक्तिमती=श्रद्धावती, प्रयता=पवित्रा, अर्चिताम्=पूजिताम्, एनाम्=समीपवर्तिनीम् (नन्दिनीम्), प्रातः=प्रभाते, आतपोवनात्=तपोवनपर्यन्तम्, अन्वेतु=अनुसरनु, सायम् सन्ध्यायाम्, अपि=पुनः, प्रत्युद्व्रजेत्=प्रत्युत्सरेत्।

**कोशः**–"वधूर्जाया स्नुषा स्त्री च", "आङीषदर्थेऽभिव्याप्तौ सीमाऽर्थे धातुयोगजे" इति चामरः।

**शब्दार्थः**–वधू=पतोहू (सुदक्षिणा), च=और, भक्तिमती=भक्तियुक्त, प्रयता=पवित्र, अर्चिताम्=पूजा की गयी, एनाम्=इस (नन्दिनी) के प्रातः=प्रातः काल में, आतपोवनात्=तपोवन तक, अन्वेतु=पीछे पीछे जाये, सायम्=सन्ध्या को, अपि=भी, प्रत्युद्व्रजेत्=स्वागत उठकर करे।

**हिन्दी**–सुदक्षिणा भी प्रातः काल, भक्तियुक्त तथा पवित्र होकर पूजा करके इस नन्दिनी को तपोवन तक पहुँचा आये और सन्ध्या को भी स्वागत करके ले आये।

**इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव।**
**अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम्।।९१।।**

**प्रसङ्गः**—वशिष्ठदिलीपयोः वार्तालापे महामुनिः वसिष्ठो दिलीपं यावन्नन्दिनी सेवया प्रसन्ना न भवति तावत्तस्याः सेवांकर्तुं निर्दिशतीति सूचयत्यत्र महाकविः कालिदासः।

**अन्वयः**—इति, त्वम्, आप्रसादात्, अस्याः परिचर्यापरः, भव, ते, अविघ्नम्, अस्तु पिता, इव, पुत्रिणाम्, धुरि, स्थेयाः।

**सञ्जीविनी**—इत्यनेन प्रकारेण त्वयाप्रसादात्प्रसादपर्यन्तम्। "आङ्मर्यादाभिविध्योः" इत्यत्र वैभाषिकत्वादसमासत्वम्। अस्या धेनोः परिचर्यापरः शुश्रूषापरो भव। ते तवाविघ्नं विघ्नस्याभावोऽस्तु। "अव्ययं विभक्ति"—इत्यादिनार्थाभावेऽव्ययीभावः। पितेव पुत्रिणां सत्पुत्रवताम् प्रशंसायामिनिप्रत्ययः। धूर्यग्रे स्थेयास्तिष्ठेः आशीरर्थे लिङ्। "एर्लिङि" इत्याकारस्यैकारादेशः। त्वत्सदृशो भवत्पुत्रोऽस्त्विति भावः।

**वाच्य०**—त्वया, परिचर्यापरेण, भूयताम्, अविघ्नेन, भूयतम्, पित्रा, इव, स्थीयताम।

**चन्द्रिका**—इति=एवम्, त्वम्=दिलीपः, आप्रसादात्=प्रसन्नतापर्यन्तम्, अस्याः=नन्दिन्याः, परिचर्यापरः=सेवानुरक्तः, भव=तिष्ठ, ते=तब (दिलीपस्य), अविघ्नम्=प्रतिबन्धकाभावः, अस्तु=भवतु, पिता=जनकः, इव=यथा, तथा पुत्रिणाम्=सुतवताम्, धुरि=पुरः, स्थेयाः=तिष्ठेः।

**समासः**—प्रसादपर्यन्तम् आप्रसादम् तस्मात् आप्रसादात्। परिचर्यायाम् परः परिचर्यापरः। विघ्नानाम् अभावः अविघ्नम्।

**कोशः**—"आङीषदर्थेऽभिव्याप्तौ सीमाऽर्थे धातुयोगजे", प्रसादस्तु प्रसन्नता "वरिवस्या तु शुश्रूषा परिचर्य्याऽप्युपासना" इति चामरः।

**शब्दार्थः**—इति=इस प्रकार, त्वम्=तुम (दिलीप), आप्रसादात्=नन्दिनी

को प्रसन्नता पर्यन्त, अस्याः=इस (नन्दिनी) की, परिचर्यापरः=सेवा में तत्पर, भव=रहो, ते=तुम (दिलीप) को, अविघ्नम्=विघ्न का अभाव, अस्तु=हो, पिता=पिता के, इव=समान, पुत्रिणाम्=पुत्र वालों के, धुरि=आगे, स्थेयाः=रहो।

**हिन्दी**–इस प्रकार तुम जब तक कि नन्दिनी प्रसन्न न हो जाय तब तक उसकी सेवा करते रहो। तुमको विघ्न न हो तथा पिता के समान ही पुत्रवालों में आगे रहो।

**तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः।**
**आदेशं देशकालज्ञः शिष्यः शासितुरानतः।।९२।।**

**प्रसङ्गः**–श्लोकेऽस्मिन् महाकविः कालिदासः महामुनिवशिष्ठादेशः दिलीपेन स्वीकृतेति सूचयति।

**अन्वयः**–देशकालज्ञः, प्रीतिमान्, शिष्यः, सपरिग्रहः आनतः, शासितुः" आदेशम्, तथा, इति, प्रतिजग्राह।

**सञ्जीविनी**–देशकालज्ञः। देशोऽग्निसंनिधिः कालोऽग्निहोत्रावसानसमयः। विशिष्टदेशकालोत्पन्नमार्ष ज्ञानमव्याहतमिति जानन्। अत एव प्रीतिमाञ्शिष्योऽन्तेवासी राजा सपरिग्रहः सपत्नीकः। "पत्नीपरिजनादानमूलशापाः परिग्रहा" इत्यमरः। आनतो विनयनम्रः सन्। शासितुर्गुरोरादेश माज्ञां तथेति प्रतिजग्राह स्वीचकार।

**वाच्य॰**–देशकालज्ञेन, प्रीतिमता, शिष्येण, सपरिग्रहेन, आनतेन, "सता" आदेश, प्रतिजगृहे।

**चन्द्रिका**–देशकालज्ञः=अवसराभिज्ञः, प्रीतिमान्=संन्तुष्टः, शिष्यः, आनतः=नम्रः शासितुः=उपदेष्टुः, (गुरोर्वसिष्ठस्य), आदेशम्=आज्ञाम्, तथा=यथाऽऽदिष्टम्, इति=एवम्, प्रतिजग्राह=स्वीचकार।

**समासः**–परिग्रहेण सहितः सपरिग्रहः।

**कोश:**–"मुत्प्रीति: प्रमदो हर्ष: प्रमोदामोदसम्मदा:" छात्राऽन्तेवासिनौ शिष्ये", "पत्नीपरिजनादानमूलशापा: परिग्रहा:" इति चामर:।

**शब्दार्थ:**–देशकालज्ञ:=देश काल को जानने वाले, प्रीतिमान्=प्रसन्न, शिष्य:=छात्र (दिलीप), सपरिग्रह:=स्त्री के साथ, आनत:=नम्र:, शसितु:=गुरु (वसिष्ठ) की, आदेशम्=आज्ञा को, तथा=वैसा ही, इति=इस प्रकार, प्रतिजग्राह=ग्रहण किया।

**हिन्दी**–देशकालको जानने वाले, प्रसन्न, छात्र (दिलीप) ने नम्र होकर "वैसा ही करूँगा" ऐसा कहकर गुरु (वसिष्ठ) की आज्ञा को शिरोधार्य किया।

**अथ प्रदोषे दोषज्ञ: सवेशाय विशां पतिम्।**
**सूनु: सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियम्।।९३।।**

**प्रसङ्ग:**–रात्रिप्रारम्भे मति महामुनि वशिष्ठ: दिलीपं शयनार्थमादि शतीति सूचयत्यत्र महाकवि: कालिदास:।

**अन्वय:**–अथ, प्रदोषे, दोषज्ञ:, सुनृतवाक्, स्त्रष्टु:, सुनु:, ऊर्जितश्रियम्, विशाम्, पतिम्, संवेशाय, विससर्ज।

**सञ्जीविनी**–अथ प्रदोषे रात्रौ दोषज्ञो विद्वान्। "विद्वान्विपश्चिद्दोषज्ञ:, इत्यमर:। सूनृतवाक्सत्यप्रियवाक्। "प्रियं सत्यं च सूनृतम् इति हलायुध:। स्रष्टु: सूनुर्वह्मपुत्रो मुनि:। अनेन प्रकृतकार्यनिर्वाहकत्वं सूचयति। ऊर्जितश्रिय विशां पतिं मनुजेश्वरम्। "द्वौ विशौ वैश्यमनुजौ" इत्यमर:। संवेशाय निद्रायै। "स्यान्निद्रा शयनं स्वाप: स्वप्न: संवेश इत्यपि" इत्यमर:। विससर्जाज्ञापयामास।

**वाच्य०**–दोषज्ञेन, सूनृतवाचा, स्त्रष्टु: सूनुना, ऊर्जितश्री:, विशांपति:, संवेशाय, विससृजे।

**चन्द्रिका**–अथ=आदेशग्रहणानन्तरम्, प्रदोषे–रजनीमुखे, दोषज्ञ:=विद्वान्, सूनृतवाक्=सत्यप्रियवचन:, स्त्रष्टु:=ब्रह्मण:, सूनु:=पुत्र:, (वसिष्ठ:),

ऊर्जितश्रियम्= लक्ष्मीशोभितम्, विशाम्=मनुजानाम्, पतिम्=स्वामिनम्, संवेशाय=शयनाय, विससर्ज=आज्ञापयामास।

**समासः**–सूनृता वाक् यस्य सः सूनृतवाक्। ऊर्जिता श्रीः यस्य स ऊर्जितश्रीः, तम् ऊर्जितश्रियम्।

**कोशः**– "मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ", "प्रदोषो रजनीमुखम्", "विद्वान् विपश्चिद् दोषज्ञः", "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी" द्वौ विशौ वैश्यमतुजौ", "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इति चामरः। प्रियं सत्यं च सुनृतम्" इति हलायुधः।

**शब्दार्थः**–अथ=इसके बाद, प्रदोषे=रात्रि के प्रारम्भ होने पर, दोषज्ञः=विद्वान्, सूनृतवाक्=सत्य और प्रिय बोलने वाले, स्रष्टुः=ब्रह्मा के, सूनुः=पुत्र, ऊर्जितश्रियम्=शोभासम्पन्न, विशाम्=मनुष्यों के, पतिम्=स्वामी को, संवेशाय=सोने के लिये, विससर्ज=आज्ञा दी।

**हिन्दी**–इसके बाद, रात्रि के प्रारम्भ होने पर विद्वान् तथा सत्य और प्रिय बोलने वाले ब्रह्मा के पुत्र (वसिष्ठ) ने शोभायुक्त, मनुष्यों के स्वामी राजा दिलीप को सोने की आज्ञा दी।

**सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः।**
**कल्पवित्कल्पयामास वन्यामेवास्य संविधाम्।।९४।।**

**प्रसङ्गः**–महामुनिः वशिष्ठो व्रतसिद्धि दृष्ट्वा दिलीपाय कुशादिशयनसामग्री सम्पादयामासेति कथयति महाकविः कालिदासोऽत्र।

**अन्वयः**–कल्पवित्, मुनिः, तपःसिद्धौ सत्याम्, अपि, नियमापेक्षया, अस्य, वन्याम्, एव, सविधाम्, कल्पयामास।

**सञ्जीविनी**–कल्पवित्व्रतप्रयोगाभिज्ञो मुनि तपःसिद्धौसत्यामपि। तपसैव राजयोग्याहारसंपादनसामर्थ्ये सत्यामीत्यर्थः। नियमापेक्षया तदाप्रभृत्येव व्रतचर्या पेक्षया। अस्य राज्ञो वन्यामेव। संविधीयतेऽनयेति संविधाम् कुशादिशयनसामग्रीम्। "आतश्चोपसर्गे" इति कप्रत्ययः। अकर्तरि च कारके संज्ञायात" इति कर्माद्यर्थत्वम्। कल्पयामास सम्पादयामास।

**वाच्य०**–कल्पविदा, मुनिना, वन्या, एव संविधा, चक्लृपे।

**चन्द्रिका**–कल्पवित्=व्रतप्रयोगाऽभिज्ञः, मुनि=वाचयमः (वसिष्ठः), तपःसिद्धौ= कृच्छ्रादिकर्मजन्याणिमाद्यष्टविधैश्वर्य, सत्याम्=विद्यमानायाम्, अपि=च, नियमापेक्षया=व्रतदृष्टचा, अस्य=दिलीपस्य, वन्याम्, संविधाम्=सामग्रीम्, कल्पयामास=सम्पादयामास।

**समासः**–तपसः सिद्धिः तपःसिद्धः, तस्यां तपःसिद्धौ नियमस्य अपेक्षा नियमापेक्षा तथा नियमापेक्षया।

**कोशः**–"तपः कृच्छ्रादिकर्म च" इत्यमरः। "सिद्धिस्तु मोक्षः निष्पत्तियोगयोः" इति हैमः। "सन् साधौ धीरशस्तयोः। मान्ये सत्ये विद्यमाने त्रिषु साध्व्युभयोः स्त्रियाम् इति मेदिनी।

**शब्दार्थः**–कल्पवित्=व्रतप्रयोग जानने वाले, मुनिः=मुनिको, तपः सिद्धौ=तपस्या से सिद्धि, सत्याम्=रहने पर, अपि=भी, नियमापेक्ष्या=व्रत दृष्टि से, अस्य= इस (राजा दिलीप) के लिए वन्याम्=वन से सम्बन्ध रखने वाली, संविधाम्=सामग्री का, एव=ही, कल्पयामास=प्रबन्ध कर दिया।

**हिन्दी**–व्रत प्रयोग जानने वाले मुनि (वसिष्ठ) तपस्या से सिद्धि के होते हुए भी व्रत को दृष्टि में रखकर राजा दिलीप के लिए वन से सम्बन्ध रखने वाली सामग्री का ही प्रबन्ध किया।

**निर्दिष्टां कुलपतिना स पर्णशाला–**
**मध्यास्य प्रयतपरिग्रहद्वितीयः।**
**तच्छिष्याध्ययननिवेदितावसानां**
**संविष्टः कुशशयने निशां निनाय।।९५।।**

**प्रसङ्गः**–राजा दिलीपः पर्णशालाया सुदक्षिणया सह कुशशयने सुप्तः निशां गमयामासेति सूचयत्यत्र महाकविः कालिदासः।

**अन्वयः**–सः कुलपतिना, निर्दिष्टाम्, पर्णशालाम्, अध्यास्य

प्रयतपरिग्रहद्वितीय:, कुशशयने, सविष्ठ: तच्छिष्याध्ययननिवेदितावसानाम् निशाम्, निनाय।

**सञ्जीविनी**–स राजा कुलपतिना मुनिकुलेश्वरेण वसिष्ठेन निर्दिष्टां पर्णशालामध्यास्याधिष्ठाय तस्यामधिष्ठानं कृत्वेत्यर्थ:। "अधिशीङ्" इत्यादिनाधारस्य कर्मत्वम्। कर्मणि द्वितीया: प्रयतो नियत: परिग्रह: पत्नी द्वितीयो स तथोक्त:। कुशानां शयने संविष्ट: सुप्त: सन्। तस्य वसिष्ठस्य शिष्याणामध्ययनेनापररात्रे वेदपाठेन निवेदितमवसान यस्तास्तां निशां निनाय गमयामास: अपररात्रेऽध्ययने मनु:–"निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुन: स्वषेत्", "न चापररात्रमधीत्य पुन: स्वपेत्" इति गौतमश्च। प्रहर्षिणी वृत्तमेतत्। तदुक्तम्–"म्रौ ज्रौ गस्त्रिदशयति: प्रहर्षिणीयम्"।

**वाच्य०**–प्रयतपरिग्रहद्वितीयेन तेन संविष्टेन तच्छिष्याध्ययननिवेदितावसानां निशा निन्ये।

**चन्द्रिका**–स=राजा दिलीप; कुलपतिना=वशिष्ठेन, निर्दिष्टाम्=दर्शिताम्, पर्णशालाम्=उटजाम्, अध्यास्य=अध्युष्य, प्रयतपरिग्रहद्वितीय:-पवित्रपत्नीसहाय:, कुशशयने=दर्भशय्यायाम्, संविष्ट:=सुप्त:, तच्छिष्याऽध्ययन-निवेदिताऽवसानम्= वसिष्ठाऽन्तेवासिपठनसूचिताऽन्ताम्, निशाम्=रात्रिम्, निनाय=यापयामास।

**समास:**–कुलस्य पति: कुलपति:, तेन कुलपतिना। पर्णानां शाला पर्णशाला, ताम् पर्णशालाम्। प्रयत: प्ररिग्रह: द्वितीय: यस्य स: प्रयतपरिग्रहद्वितीय:। कुशानाम् शयनम् कुशशयनम्, तस्मिन् कुशशयने। तस्य शिष्या: तच्छिष्या:, तच्छिष्याणाम् अध्ययनम् तच्छिष्याध्ययनम्, तच्छिष्याऽध्ययनेने निवेदितम् तच्छिष्याऽध्ययननिवेदितम्, तच्छिष्याध्ययननिवेदितम् अवसानम् यस्या: सा तच्छिष्याऽध्ययननिवेदिताऽवसाना, ताम् तच्छिष्याऽध्ययननिवेदिताऽवसानाम्।

**कोश:**–"सजातीयै: कुलम्", "स्वामी त्वीश्वर: पतिरीशिता। अधिभूर्नायिको नेता प्रभु: परिवृढोऽधिप:" इति चामर:। कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबम्" इति मेदिनी।

**शब्दार्थ:**–स:=वह (दिलीप), कुलपतिना=कुलपति (वसिष्ठ), द्वारा, निर्दिष्टाम्= दिखाई गई, पर्णशालाम्=पर्णकूटी में, अध्यास्य=रह कर, प्रयतपरिग्रहद्वितीय:=पवित्रपत्नी के साथ, कूशशयने=कूश की शय्या पर, संविष्ट:=सोकर, तच्छिष्याध्ययननिवेदिताऽवसानाम्=वसिष्ठ के शिष्यों के अध्ययन से जिसका अन्त समझा जाय ऐसी, निशाम्=रात्रि को, निनाय=बिताया।

**हिन्दी**–दिलीप ने, कुलपति (वसिष्ठ) के द्वारा दिखाई गयी पर्णकूटी में रहकर, पवित्र पत्नी के साथ कूशासन पर सोकर, वशिष्ठ के शिष्यों के अध्ययन से जिसकी समाप्ति समझी जाती है ऐसी रात बितायी।

**।। इति ।।**

◆◆◆

# श्लोकानुक्रमणिका

## रघुवंश-प्रथमसर्गे प्रश्नाः

१. अधोलिखितेषु पद्येषु स्वेच्छया केषांचित् त्रयाणां पद्यानामनुवादः हिन्दीभाषया कार्यः –

(क) प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः।।

(ख) स वेलावप्रवलयां **परिखीकृतसागराम्**।
अनन्यशासनामुर्वीं शशासैकपुरीमिव।।

(ग) मा भूदाश्रमपीडेति परिमेयपुरः सरौ।
अनुभावविशेषात्तु सेनापरिवृताविव।।

(घ) काऽप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव।।

(ङ) इति विज्ञापितो राज्ञा **ध्यानस्तिमितलोचनः**।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः।।

२. अधोलिखितेषु केषांचित् त्रयाणां संस्कृतभाषया व्याख्या कार्या २४

(क) क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनाऽस्मि सागरम्।।

(ख) तयोर्जगृहतु पादान् राजा राज्ञी च मागधी।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः।।

(ग) सोऽहमिज्या विशुद्धात्मा प्रजालोपनिमीलितः।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः।।

(घ) वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम्।
विद्यामभ्यसनेनैव प्रसादयितुमर्हसि।।

३. उपर्युक्तेषु श्लोकेषु केषांचित् त्रयाणां रेखांकितपदानां विग्रहप्रदर्शन

पूर्वक समासनामानि लेख्यानि। ६

४. अधोलिखितेषु पदेषु सन्धिविच्छेदं दर्शयित्वा संस्कृतेन पर्यायो लेख्यः– १२

शास्त्रेष्वकुण्ठिता, अपत्यैरिव विजितारिपुरः, परत्रह, इवाचलः, ह्यग्नौ।

५. दिलीप–वशिष्ठयोः संवादो वर्ण्यताम्। १४

अथवा

रघुवंशे रघूणां वर्णनं क्रियताम्।

## १९७५

### प्रश्नाः

१. निम्नाङ्कितश्लोकेषु यथेच्छं केषांचित् त्रयाणां श्लोकानां हिन्दीभाषया अनुवादः कार्यः– २४

(अ) **व्यूढोरस्को** वृषस्कन्धः शालप्रांशुर्महाभुजः।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः।।

(आ) **शैशवेऽभ्यस्तविद्यानां** योवने विषयैषिणाम्।
वार्द्धक्ये मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।।

(इ) जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत्।।

(ई) श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां **तोरणस्रजम्**।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ।।

(उ) **असह्यपीडं** भगवन्नृणमन्त्यमवेहि मे।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः।।

२. निम्नाङ्कितश्लोकेषु त्रयाणां श्लोकानां संस्कृतभाषया व्याख्यानम पेक्ष्यते– २४

(क) अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः।

मणौ वज्रसमुत्कीर्णे सूत्रस्येवाऽस्ति मे गतिः।।

(ख) सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम्।।

(ग) नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः।
न प्रकामभुजः श्राद्ध स्वधासंग्रहतत्पराः।।

(घ) भुवं कोष्णेन कुण्डोध्नी मध्येनावभृथादपि।
प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना।।

३. उपर्युक्तपद्येषु रेखाङ्कितपदेषु केषांचित् त्रयाणां विग्रहं प्रदर्श्य समास-नामानि लिखत। ६

४. निम्नाङ्कित-पदेषु चतुर्णां सन्धिविच्छेदं दशयता संस्कृतेन पर्यायो लिख्यताम्। १२

सेकान्ते; आलवालाम्बुपायिनाम्; गुप्ततमेन्द्रियः, वंशेऽस्मिन्; गमिष्याम्युपहास्यताम; आसीन्महाक्षिताम्; प्रणवश्छन्दसामिव।

५. वशिष्ठस्याश्रमवर्णनं क्रियताम्। १४

अथवा

महाकविकालिदासस्य कः कालः? इति लिख्यताम्।

## हमारे महत्वपूर्ण प्रकाशन

1. अभिज्ञान शाकुन्तलम्-मूल तथा नीलकंठी टीकासहित-छात्र सं०150.0
डॉ- गोपाल रेड्डी- पुस्तकालय संस्करण 250.0
2. अभिज्ञान शाकुन्तलम् -संस्कृत हिन्दी व्याख्या सहित-छात्र सं० 85.00
- डॉ० शिव प्रसाद द्विवेदी - पुस्तकालय सं० 150.00
3. मृच्छकटिकम् -सन्दर्भ, प्रसंग, अन्वय, 'जयन्ती' संस्कृत हिन्दी
-व्याख्या सहित - आचार्य रामानन्द द्विवेदी -छात्र सं० 80.00
पुस्तकालय सं० 150.00
4. लघुसिद्धान्त कौमुदी-संस्कृत, हिन्दी व्याख्या सहित -छात्र सं० 75.00
हरेकान्त मिश्र- द्वितीय सं०-1996 पुस्तकालय सं० 125.00
5. चन्द्रालोक- संस्कृत, हिन्दी व्याख्या सहित -द्वितीय सं०-1996
-डॉ० त्रिलोकी नाथ द्विवेदी -छात्र सं० 60.00
-पुस्तकालय सं० 80.00
6. नीतिशतकम् -संस्कृत, हिन्दी व्याख्या सहित-द्वितीय सं० 1996
-गोस्वामी प्रह्लाद गिरि -छात्र सं० 40.00
पुस्तकालय सं० 60.00
7. सरल अनुवाद चन्द्रिका- शिवशंकर गुप्ता -तृतीय सं० 1996 45.00
8 स्वप्नवासदत्तम्- प्रसंग, अन्वय, व्याख्या, समास, कोश, छन्द,
अलंकार, भावार्थ, हिन्दी अनुवाद सहित -मदन गोपाल वाजपेयी 30.00
9. वैदिक साहित्य का इतिहास - जयदेव वेदालंकार 50.00
10 बृहद् संस्कृत निबन्ध कलिका - शिव प्रसाद द्विवेदी 80.00

## भारतीय विद्या प्रकाशन

1. यू० बी०, जवाहर नगर
बैंग्लो रोड
दिल्ली - 110007

(भारत)

पो० बा० 1108
कचौडी गली
वाराणसी-221001